सर्वमेतत् प्रागुक्तव्याख्याभिः व्याख्यातसतत्त्वम् । तडित्पुञ्जनिभे उद्गते दंष्ट्रे यस्य, जटानां ज्वालानां चासमा प्रभा दीप्तिर्यस्य, कोटरं कुहरं तदाकृतीन्यक्षीणि यस्य अनेन अन्तर्लक्ष्यतां बहिर्दृष्टित्वं च दर्शयति, सुष्ठु भीषणत्वं नाम्नैवोक्तम् । मेखलशब्दे तु ह्रस्व ऐश्वरः । त्रिलोचनमिति प्रतिवक्त्रम् । अवतानितं मण्डलीकृतदोर्दण्डम्, स्फुरिताधरत्वं निःशेषविघ्नभक्षणपरत्वेन ॥९॥

एतद्रूपमनुग्राह्यैरुपास्यमित्याह–

**एवं तं भैरवं देवं स्वच्छन्दं परिकीर्तयेत् ।**

स्वच्छन्दनाथमेव बहुरूपत्वादनेन सुभीषणेन विघ्नसंत्रासनेन रूपेण चिन्तयेदित्यर्थः । अतश्च–

**स्मरणान्नाशयेद्देवः पापसंघातमुल्वणम् ॥१०॥**

ध्यायिनां व्याध्याद्युद्भावकप्राक्तनमहापापप्रशमनायैव तेनैवंविधं रूपं स्वेच्छया गृहीतम् । अतः स्मरणादेवोल्वणं दुष्टभोगदानायोन्मुखीभूतं पापसंघातं नाशयत्येव । अत एव चतुर्वक्त्रात् श्रीव्याधिभक्षभट्टारकादयमन्य एव देवो व्याध्याधिकारणभूतमहापापभक्षण इत्यवगतम् ॥१०॥

---

और अभय मुद्राओं से मोदमय, २८–घोर काले अंजन से समूह के समान कृष्ण, २९–स्फुरित होठों से सुन्दर, ३०–ब्रह्मा, इन्द्र और विष्णु रूप त्रिदेवों से प्रणम्य और ३१–देवों के लिये भी दुर्लभ सृष्टि संहार क्रिया में समर्थ देव भैरव भट्टारक के हृदय से विनिर्गत । इसी रूप में तत्कालीन देवों ने उन्हें देखा था ॥३-९॥

श्लोक दो में महाभैरव देव की चर्चा है । उन्हीं के हृदय से इस नये देव की उत्पत्ति हुई है । श्लोक ४ में इनका नाम कोटराक्ष रख दिया गया है । श्लोक १० में उन्हें ही स्वच्छन्द भैरव नाम से विभूषित किया गया है और यह निर्देश दिया गया है कि, अनेक रूपों में व्यक्त, भीषण विघ्नविध्वंसकारी रूप में श्री स्वच्छन्दनाथ का ही स्मरण कीर्त्तन करना चाहिये । ये देवाधिदेव स्मरण मात्र से उल्वण पापराशि के सर्वनाश में समर्थ हैं । रहस्य की बात तो यह है कि, उनके ध्यान में लगे भक्तों की व्याधियों के उद्भव के मूल प्राक्तन पापों के विध्वंस के लिये ही उन्होंने इस प्रकार के विकराल रूप को अपनाया । अतः असह्य पीड़ाप्रद पाप–संघातों का नाश उनके स्मरण से ही हो जाना स्वाभाविक है ॥१०॥

किञ्च,

**अस्य मन्त्रः पुराख्यातो द्वात्रिंशाक्षरसंमितः ।**

यस्तं भीषणरूपानुगुणतया–

**पञ्चप्रणवपूर्वान्तं तत्र लीनं जपेन्मनुम् ।।११।।**

प्राग्दर्शितसतत्त्वाः पञ्च प्रणवाः पूर्वान्तयोः यस्य तम्, तत्रैव पञ्चप्रणवस्वरूपे लीनं विश्रान्तम्, तद्भित्त्यर्थं तदाच्छुरितं चेमम्, महामन्त्रं पूजान्ते जपावसरे जपेत् । अतश्चैवं वाच्यवाचकक्रमाभ्यां दीप्तत्वादघोरीश्वर्ययुक्तत्वाद् भाविविशिष्टदेवतापरिवृतत्वेतराभ्यामस्य द्वात्रिंशदक्षरादन्यत्वमित्यनुष्ठानान्तरमेवैतत् ॥११॥

तदीदृशस्य–

**तस्य कल्पं प्रवक्ष्यामि समासान्न तु विस्तरात् ।**

कल्प्यत आराध्यतेऽनेनेति कल्पः विधानम् । तमाह–

**पूर्वोक्तभूप्रदेशे च विशुद्धे शुभलक्षणे ।।१२।।**

---

व्याधियों और आधियों के कारणभूत पापराशि के नाश करने वाले ये कोटराक्ष रूप स्वच्छन्द भट्टारक भैरवदेव, चतुर्वक्त्र सम्पन्न व्याधिभक्ष नामक भैरव के अतिरिक्त देव हैं । इनकी पृथक् गणना करनी चाहिये । इनका द्वात्रिंशदक्षर का मन्त्र पहले ही कहा गया है । इस मन्त्र का जप पञ्चपणव पूर्व और अन्त दोनों ओर लगाकर किया जाता है । जप करते समय साधक स्वात्म को मन्त्र की रहस्यात्मकता में लीन रहकर जप करे । यही शास्त्र का निर्देश है । मन्त्र के वाचक वर्णों और उनके वाच्य देवों का क्रम निर्धारित है । उसी के क्रम के अनुसार अघोरैश्वर्य का बोध उससे होता है । इसमें अघोरीश्वरी को युक्त करने का विधान नहीं है । इसके अतिरिक्त एक अनुष्ठान ऐसा भी करते हैं, जिसमें भावी पटलों में उक्त देवताओं से परिवृत और अपरिवृत अन्य मन्त्रमय देव की आराधना की जाती है । वह अलग विधान है ॥११॥

उसी पूर्वोक्त पञ्चप्रणव पूर्वान्त मन्त्र सिद्धि का तत्काल प्रचलित प्रकल्प संक्षेप से यहाँ कहा जा रहा है । अतः वर्णन की समासपद्धति ही यहाँ अपनायी जा रही है । व्यास पद्धति का आश्रय यहाँ नहीं लिया जा रहा है । कल्पना का अर्थ आराधना का विधान ही माना जाता है । इसके लिये शुभ भूप्रदेश की अपेक्षा होती है । इसका वर्णन अन्य सन्दर्भों में भी आ चुका है । उसी के अनुसार भूप्रदेश की व्यवस्था करनी चाहिये ॥१२॥

**पुष्पप्रकरसंकीर्णे गन्धधूपाधिवासिते ।**
**तत्र मण्डलमालिख्य पूर्वोक्तैर्वर्णकैः शुभैः ।।१३।।**
**एकहस्तं द्विहस्तं वा चतुर्हस्ताष्टहस्तकम् ।**
**सुसूत्रितं समं कृत्वा चतुरस्त्रं समन्ततः ।।१४।।**
**पूर्ववत्साधयित्वा तु दिग्भागांस्तु वरानने ।**

पूर्वोक्तैरिति–

'धाम्ना तु रजसां पातः..........' । (४/३५)

इति वाक्येन सूचितैः, वर्णकैः सिन्दूरादिभिः । गतार्थमन्यत् ।

एतत्प्राक्तनमण्डलाद्विशिष्टं मण्डलमित्याह–

**चतुर्द्वारसमोपेतष्टपत्रं सकर्णिकम् ।**
**मध्ये पद्मं समालिख्य केसरैरुपलक्षितम् ।।१५।।**
**द्वात्रिंशदक्षरं बाह्ये चक्रमालिख्य शोभनम् ।**
**एवं सुसूत्रितं कृत्वा बाह्ये चैव तु वर्तुलम् ।।१६।।**

---

भूमि सम्बन्धी कुछ विशेषताओं का उल्लेख कर रहे हैं । १–पुष्प राशि से समन्वित, २–गन्ध धूप आदि से अधिवासित, ३–मण्डल बनाने के योग्य इन तीन सुविधाओं से युक्त भूमि पर मण्डल रचना की जानी चाहिये । उसे रजस् से रंजित कर वर्णक अर्थात् सिन्दूर आदि शुभ रङ्गों से भी रंजित करना चाहिये ।।१३।।

यह मण्डल चतुष्कोण हो, एक, दो, चार, आठ आदि हाथों के चौकोर क्षेत्र में निर्मित हो, सूत्रों से शुद्ध नापने अर्थ में सुसूत्रित प्रयोग किया गया है । अच्छी तरह से चारों ओर से सुसज्जित किया गया हो । इस विषय में पहले कहे गये नियमों को ध्यान में रखकर सारे दिग्विभागों से सुरक्षित और आकर्षक मण्डल होना चाहिये । एक हाथ आदि के मण्डप वित्तहीन व्यक्तियों की सादगी को ध्यान में रखकर ही कहा गया है ।।१४।।

कुछ और विशिष्टता का वर्णन कर रहे हैं–१–चारों दिशाओं में चार द्वार हों, २–मुद्राओं और अलङ्कारों से सुशोभित होना चाहिये । ३–अष्टपत्र की रचना उसमें की गयी हो । ४–ऐसे अष्टपत्र कमल की कर्णिका भी रंगों से रंजित हो । ५–यह पद्म बीच में निर्मित हो । ६–केसरों की उसमें प्रकल्पना की गयी हो ।।१५।।

**चतुरस्त्रं तदासन्नं बाह्ये वीथीं प्रकल्पयेत् ।**
**मध्यपद्मप्रमाणेन द्वारं कल्प्येत पूर्ववत् ।।१७।।**

एवमिति चक्रपरीमाणानुसारेण, सुसूत्रितं वर्तुलं भ्रमं कृत्वा, तस्यासन्नं च चतुरस्त्रं कृत्वा वीथीं प्रकल्पयेत् । तद्बाह्येऽन्तःपद्मक्षेत्रमानं कण्ठकपोलशोभोपशोभाढ्यं चतसृषु दिक्षु द्वारचतुष्टयं कल्पयेत् ॥१७॥

अथ निष्पन्ने मण्डले साधकः-

**भस्मोद्धूलितदेहस्तु मुद्रालङ्कारभूषितः ।**
**केशयज्ञोपवीती च दिग्वासाः संयतेन्द्रियः ।।१८।।**
**शंखार्घपात्रहस्तस्तु सकलीकृतविग्रहः ।**
**परितोऽस्त्रं प्रविन्यस्य भैरवं पूजयेत्प्रिये ।।१९।।**
**प्रणवासनसंस्थं तु**

भस्मोद्धूलितत्वादिना साधकस्य मन्त्राराधनावसरे महाव्रतित्वमुक्तमत एव परभैरवानुकारित्वेनापि तदभिमानिनो विघ्ना नश्यन्ति । भाव्यस्यात्र जलस्नानादि नोक्तम्, दिग्वासास्तदन्यस्य यत्संयमनाशनेनैव कौपीनग्रहणात् ? शङ्खमत्र प्रकरणसामर्थ्यान्महाशङ्खम् । परितोऽस्त्रं सर्वतोऽस्त्रप्राकारम् । प्रणवासनस्थत्वं प्राग्वत् ।

---

३२ अक्षर वाले मन्त्र का एक चक्र लिखकर उसके बाहर एक सूत्र लेकर चारों कोणों का स्पर्श करते हुए एक वर्त्तुल भ्रमि बनायी जाय । पुनः इसके चारों ओर एक वीथी बनायी जाय । मध्य में ३२ अक्षर वाले चक्र को ध्यान में रखकर चारों ओर द्वार बना लिये जाँय । अन्तश्चक्र के मान के अनुसार ही ये बाहरी बीथियाँ और द्वार निर्मित होने चाहिये ॥१७॥

यह एक मण्डल का प्रारूप है । इस मण्डल में बैठ कर साधक भैरव की पूजा करता है । साधक महाव्रती है । एकनिष्ठ भाव से उसे पूजा करनी है । इसलिये उसने सारे शरीर में भस्मी रमा रखी है । मुद्राओं और अलङ्कारों से वह अलङ्कृत है । केश रखे हुए है । साथ ही यज्ञोपवीत भी धारण कर रहा है । दिगम्बर भाव में प्रतिष्ठित है । इन्द्रियों को वश में करके रखने वाला है । अन्यथा कौपीन धारण करना पड़ता है । एक तरह से उसने भैरव का रूप ही धारण कर लिया है क्योंकि किसी रूप में भी विघ्न पास नहीं फटक पाते हैं ॥१८॥

अपने साथ में शङ्ख और अर्घपात्र धारण कर अवस्थित है । पूरा शरीर सकलीकृत है । अपने चारों ओर अस्त्रमन्त्र का प्रयोग कर वह सुरक्षित है । यहाँ शङ्ख का अर्थ प्रकरणवश महाशङ्ख लेना चाहिये ॥१९॥

कथं पूजयेत् कं च भैरवमित्याह–

**मूर्त्तिं हंसाक्षरेण तु ।**

**तमेव सकलं देवं स्वच्छन्दं परमेश्वरम् ।।२०।।**

मूर्त्तिं हंसाक्षरेणेति पूर्वोक्तेन चिन्मूर्तिमन्त्रेण द्वात्रिंशदक्षरेण च सकलमूर्तिरूपेण । तमेवेति पूर्वोक्तम् ।।२०।।

किमविशिष्टं नेत्याह–

**यत्तत्परमनिर्भासमनामयमरूपकम् ।**

**तेन चावाहयेद्देवि**

परमः सर्वोत्कृष्टो निर्भासो यस्य, अनामयं मायासम्बन्धहरम्, अरूपकमनाकृति यत्पूर्वं निष्कलं तत्त्वमुक्तम्, तेन प्रोक्तनीत्याद्यन्तस्थितेन सहितमावाहनमुद्रयावाहयेत् पूजनार्थमभिमुखीकुर्यात् ।

किञ्च,

**हृच्छिरश्च शिखां तथा ।।२१।।**

**वर्म नेत्रे तथास्त्रं त्त तेनैव परिकल्पयेत् ।**

---

भैरवदेव वही सकल स्वच्छन्द भैरव ही यहाँ इस रूप में पूज्य हैं । वे प्रणव के आसन पर हंसाक्षर रूप में विराजमान हैं । इसका तात्पर्य यह है कि, वे सकल और निष्कल दोनों ही रूपों में वहाँ पूज्य हैं ।।२०।।

ऐसे ये भैरव देव अनन्त उत्कृष्टताओं से अलङ्कृत हैं, ऐसा शास्त्र कहते हैं । वे परम प्रकाश से शाश्वत प्रकाशमान हैं । उनके अनामय रूप के अमृत का पान भक्तों की आँखें नित्य करतीं और तृप्त होती हैं । इसी रूप में उनका आवाहन करना चाहिये । अवाहन में आवाहन मुद्रा का प्रयोग करना चाहिये ।

उनके सकल और निष्कल रूपों के साथ हृदय, शिर, शिखा, कवच, नेत्रत्रय और अस्त्र जातियों का परिकल्पन करना चाहिये । जैसे 'ओं हूं सर्वज्ञाय अघोरेभ्यो हृदयाय नमः' और अन्त में 'ओं हूं दुर्भेद्यपाशुपत्याय नमस्ते रुद्र रूपेभ्यो नमः अस्त्राय फट् हूं ओम्' ।

आचार्य क्षेमराज ने यहाँ एक पारम्परिक पद्धति की ओर सङ्केत किया है । हो सकता है, गुरु परम्परा में यह पद्धति रही हो किन्तु श्लोकों से यह

तेनैवेति नैष्कलेन हृदाद्यङ्गमन्त्रेण, न तु प्राग्वत्सकलेनापि । ब्रह्मपञ्चकमन्त्राणां तु न सकलादिविभागोऽस्तीति प्राग्वत् तन्न्यासानन्तरं भगवदाकृतौ निष्कलाङ्गन्यासः ।

इत्थं च निष्कलसकलात्मकैकरूपे भगवत्याह्वानसमय एव निष्कलसकलमन्त्रोच्चाराद् निष्कलस्थानविहितपरमीकरणे न्यस्ते वक्त्रनैष्कलाङ्गविन्यासे कृते–

**स्थापनं सन्निधानं च निरोधार्घादिपूजनम् ।।२२।।**

**सर्वं तेनैव कर्तव्यमुक्तानुक्तं वरानने ।**

स्थापनादि सर्वं पूर्वप्रदर्शितमुद्राबन्धपूर्वं कर्तव्यम् । तेनैवेति निष्कलसंपुटितेन सकलेन । उक्तमिति स्थापनादि, अनुक्तं तु स्वागतपाद्याचमनस्नानादि आत्मनिवेदनपर्यन्तम् । इत्थं च–

**मध्यस्थं भैरवं पूज्यमङ्गषट्कसमन्वितम् ।।२३।।**

मध्यस्थमिति मध्यगतम्, भैरवमिति भैरवतेज इत्यर्थः ।।२३।।

---

प्रमाणित नहीं प्रतीत होती । श्लोक २० में सकल और निष्कल दोनों की पूजा का निर्देश है । स्वयं क्षेमराज ने श्लोक २० के उद्योत में सकल मूर्त्तिरूपेण लिखा है ।

किन्तु श्लोक २१ के उद्योत में ब्रह्मपञ्चक मन्त्रों में सकलादि विभाग का खण्डन करते हुए आचार्य यहाँ कहते हैं कि, भगवदाकृति में निष्कलाङ्ग न्यास ही होगा । 'न तु प्राग्वत्सकलेनापि ?' यह क्यों । श्लोकों से यह झलक नहीं मिलती । इस पर विद्वान् साधकों को विचार करना चाहिये ।

आवाहन के समय सकल स्वच्छन्द परमेश्वर के रूप का कथन किया गया है । जो हो, यदि सकल और निष्कल की एक रूपता का भी आवाहन हो रहा है, तो भी भगवदाकृति में सकल निष्कल अङ्गन्यास करने में कोई हर्ज मुझे नहीं लगता । इसमें आग्रह की कोई बात नहीं होनी चाहिये । पारम्परिक शास्त्र की बात गहराई से विचार करने योग्य है ।

तत्पश्चात् स्थापन, सन्निधापन, निरोधन, अर्घ आदि मुद्रा प्रदर्शन पूर्वक पूजन होना चाहिये । सारी पूजा निष्कल सम्पुटित सकल मन्त्र से की जानी चाहिये । अनुक्त पूजन के अन्तर्गत, स्वागत आचमन स्नानादि आत्मनिवेदन आदि आते हैं । इस प्रकार षडङ्ग भैरव की जो वहाँ मध्य में विराजमान हैं, उनकी पूजा होनी चाहिये ।।२१-२३।।

किं चात्र पद्मबाह्ये द्वात्रिंशदरेके चक्रे

**ततः पत्रस्थिता देवीर्द्वात्रिंशार्णैर्निवेशयेत् ।**

**पूर्वारकात्समारभ्य यावदन्ते व्यवस्थिताः ।।२४।।**

पत्रस्थिता इति अष्टपत्रस्य पद्मस्योक्तत्वात् प्रतिदिक्पत्रानुसारिस्थिताराचतुष्टये चक्रे सन्निवेशयेदिति द्वात्रिंशार्णैरिति तकारलोप ऐश्वरः, तेन द्वात्रिंशद्देवीः द्वात्रिंशतैव अर्णैः, अर्थाद् द्वात्रिंशद्वर्णसम्बन्धिभिर्विभज्य निवेशयेत् ॥२४॥

**तासां नामानि वक्ष्यामि द्वात्रिंशत्परिसंख्यया ।**

तानि मन्त्रस्थाक्षरस्फारसारतत्सदृशप्रथमनामाक्षररूपाणि निरूपयति–

**अरुणा घोषा देवी च रेवती, भोगदायिका ।।२५।।**

**स्थापनी घोरसंज्ञा च रक्षा, भारभरेति च ।**

**घोररूपा रवा घोणा, रतिस्ताराथ रूपिणी ।।२६।।**

**भयहानिस्तु, चण्डा वै सर्वदा च तथा वरा ।**

**तक्षकी, च तथा शार्वी बर्बरा सर्वगा तथा ।।२७।।**

**रौद्री, च भ्रामणी चैव नागिनी च मनोहरा ।**

**स्तम्भनी, रोषणी चैव द्रावा रुद्रा प्रशासिनी ।।२८।।**

---

३२ पत्रों वाले मध्य पद्म चक्र के पहले अररूप पत्र पर ३२ अक्षरों के वर्णों के रूप में देवी की न्यास विधि पूरी की जाती है । यह न्यास अनिवार्य न्यास माना जाता है । इन पत्रों पर ३२ शक्तियों का भी न्यास होता है ॥२४॥

अकरादि अघोर मन्त्र के ३२ अक्षरों के साथ ही इन शक्तियों का न्यास करना चाहिये । उनके नाम इस प्रकार हैं–

१–अरुणा, २–घोषा, ३–देवी, ४–रेवती, ५–भोगदा, ६–स्थापनी, ७–घोरा, ८–रक्षा, ९–भारभरा, १०–घोररूपा, ११–रवा, १२–घोणा, १३–रति, १४–तारा, १५–रूपिणी, १६–अभया, १७–चण्डा, १८–सर्वदा, १९–वरा, २०–तक्षकी, २१–शार्वी, २२–बर्बरा, २३–सर्वगा, २४–रौद्री, २५–भ्रामणी, २६–नागिनी, २७–मनोहरा, २८–स्तम्भनी, २९–रोषणी, ३०–द्रावा, ३१–रुद्रा, ३२–प्रशासिनी (भयापहारिणी) । इनका न्यास मन्त्राक्षर क्रम से करना चाहिये । इसी से इनके पराक्रम की व्याप्ति का भी अनुभव करना चाहिये ॥२५-२८॥

**भयापहारिणी देवी ज्ञेया द्वात्रिंश तत्क्रमात् ।**

तत्क्रमादिति मन्त्रगताक्षरक्रमानुसारेणेत्यर्थः । एवं चाभिदधन्न केवलं मन्त्रस्य पूर्वनिर्णीतवाक्यरूपा वीर्यव्याप्तिः यावद्वर्णानुसारेण प्रोक्तदेवताचक्रव्याप्तिमयत्वम-पीत्यादिशति देवः ।

आसां देवीनामावाहनादौ मन्त्रमाह–

**प्रणवादिस्ततो वर्णो देवीनाम नतिस्तथा ।।२९।।**
**सर्वासां तु विधिर्ह्येष कर्तव्यो विधिवेदिना ।**

वर्ण इति द्वात्रिंशदक्षरसम्बन्धी क्रमेणैकैक इत्यर्थः । नाम इति चतुर्थ्यन्त-मित्यर्थात् । विधिरिति पूजादिविषयो मन्त्रोच्चारणप्रकारः । विधिवेदिनेत्येष आवाहनादावामन्त्रणविभक्त्यन्तं नाम तथा तत्कर्मानुसारेण जातिप्रयोग इत्यनुमन्तव्यमिति ध्वनति ।

अथासां देवीनां प्रतिदिशं चतसृणां पूर्वोक्तनीत्या भैरवीयप्रपञ्चव्याप्तितत्त्व-लोकपालानुसारेण भैरवानुसारेण ध्यानं निर्दिशति–

**हेमाभं प्राक्चतुष्कं तदिन्द्रचापसमप्रभम् ।।३०।।**
**चतुर्मुखं चतुर्बाहु वज्रहस्तं सुगर्वितम् ।**
**कपालमालाभरणं प्रहसत्तु विचिन्तयेत् ।।३१।।**

प्राक्चतुष्कमिति पद्मप्राग्दलसंश्लिष्टानां चतुष्टयनिविष्टमरुणादिचतुष्कं तद्दिक्पतितुल्यत्वाद् हेमप्रभं वज्रहस्तं च, इन्द्रचापसमप्रभमिति अन्तःस्फुरन्नानावर्ण-भास्वरम्, ऊर्ध्ववक्त्रस्य निष्प्रपञ्चत्वात् सिद्ध्यनुगुणता नास्तीति पञ्चवक्त्रशक्तिम-

---

इनके आवाहन और स्थापन का मन्त्र इस प्रकार बनाया जाना चाहिये । पहले प्रणव, फिर वर्ण और देवीनाम तथा नमन होना चाहिये । जैसे 'ॐ अवर्णे अरुणामावाहयामि, स्थापयामि, प्रणमामि अरुणायै नमः । यही क्रम सभी देवियों के क्रमिक वर्ण के साथ अपनाना चाहिये । इस विधि के विशेषज्ञ को विवेक पूर्वक जाति आदि के प्रयोग के साथ ही इसकी व्यवस्था करनी चाहिये ॥२९॥

**पूर्वा दिक् की देवियों के ध्यान**–पद्म के पूर्व दल में संश्लिष्ट अरुणा, घोषा, देवी और रेवती ये चारों स्वर्णवर्णा होने के कारण बड़ी रमणीय होती हैं । इनके दिक्पति इन्द्र हैं । इसी अनुरूपता के आधार पर इन्हें भी वज्रहस्ता मानते हैं । इन्द्रधनुषी रंगों से ये आभान्वित होती हैं । इनसे स्वतः स्फूर्यमाण विभिन्न वर्णों की भास्वरता से प्राचीदिङ्मण्डल भी भासमान हो जाता है ।

दधिष्ठितमपि देवताचक्रं साधकसिद्ध्यानुगुण्येन गृहीतचतुर्मुखचतुर्भुजादिरूपं दर्शितम् । एकत्र दक्षहस्ते वज्रस्योक्तत्वादनुक्तमपि कपालखट्वाङ्गधारित्वमभयकरत्वमंशेन भैरवरूपानुकारादुक्तम्, अतश्च कपालमालाभरणत्वमपि संगतमेवेति तदनुसारेण प्रतिवक्त्रं त्रिनेत्रत्वमपि मन्तव्यम् । सगर्विततत्वं प्रहसत्त्वं च निर्विघ्नसिद्धिदानानुगुण्येन कियदेतद्वस्तु इत्याशयात् । एतच्चतुर्मुखत्वादि प्रहसितत्वान्तं सर्वत्र चतुष्केऽनुमन्तव्यम् तथा कपालखट्वाङ्गहस्तत्वादिकं च ॥३१॥

**आग्नेयं रक्तवर्णाभं शक्तिहस्तं सदा स्मरेत् ।**
**दण्डहस्तं स्मरेद्याम्यं कृष्णवर्णं सुभीषणम् ।।३२।।**
**नीलमिन्दीवराभासं नैर्ऋतं खड्गहस्तकम् ।**
**श्यामं वारुणदिग्भागे पाशहस्तं विचिन्तयेत् ।।३३।।**

---

भगवान् भैरव का ऊर्ध्व मुख प्रपञ्च रहित माना जाता है । उसमें सिद्धियों का आनुगुण्य भी नहीं होता । इसीलिये इन शक्तियों को भी पञ्चवक्त्र शिव से अधिष्ठित पर भी चतुर्मुख और चतुर्भुज विशेषणों से विभूषित किया जाता है । एक हाथ में वज्र होने की बात पहले ही कही गयी है । अत: दूसरे हाथों में कपाल माला भरणा ये देवियाँ अन्य हाथों में कपाल, खट्वा, अभय और वरद मुद्राओं समन्वित होती हैं । इस तरह इनकी भैरव एकरूपता भी बनी रहती है । इनको त्रिनेत्रा मानना भी इसी आधार पर उचित है । सुगर्वितत्व और प्रहसत्वदनत्व भी भैरव के गुण हैं । अत: इनमें भी स्वभावत: प्रकल्पनीय है । ये चतुर्मुखत्व और प्रहसद्वदनत्व सभी देवियों के समान गुण है, यह ध्यान देने की बात है ॥३०-३१॥

आग्नेय दल पर भोगदा, स्थापनी, घोरा और रक्षा नामक देवियाँ रक्तवर्ण की आभा से भरपूर होती हैं । ये नित्य अपने एक हाथ में शक्ति धारण करती हैं । शेष हाथों में खट्वा आदि शस्त्र रहते हैं ।

याम्य दलीया भारभरा, घोररूपा, रवा और घोणा यम की तरह दण्डहस्त ही मानी जाती हैं । ये सभी कृणवर्णा, देखने में बड़ी भीषण होती हैं ॥३२॥

नैऋत्यकोणीय दल पर संश्लिष्ट रति, तारा, रूपिणी और भयहानि अर्थात् अभया नाम देवियाँ होती हैं । ये सभी अपने हाथों में तलवार धारण करती हैं । नील कमल के समान नीलवर्णों में इनकी उपासना की जाती है ।

वरुण देव की पश्चिमा दिक् वाले दल में चण्डा, सर्वदा, वरा और तक्षकी देवियों का निवास माना जाता है । ये सभी श्यामवर्णा, पाशहस्ता होती हैं । श्लोक ३१ में आये विशेषण सभी दिग्देवियों के माने जाते हैं ॥३३॥

**धूम्रं सामीरदिग्भागे ध्वजहस्तं सुचञ्चलम् ।**
**उत्तरं धवलं ज्ञेयं गदाखेटकधारि च ।।३४।।**
**स्फटिकाभं तथैशान्यां त्रिशूलायुधपाणिकम् ।**

उत्तरस्मिन्देवीचतुष्टये खेटकधारित्वस्य स्वकण्ठेनोक्तत्वादभयपाणित्वं न ध्यातव्यम् । चतुर्मुखत्वादि सर्वमन्यत्प्रागवत् ।

अत्र ध्याने फलमाह–

**एवं ध्यानपरो यस्तु चक्रमेतत्सदाभ्यसेत् ।।३५।।**
**वत्सरार्धाद्वरारोहे तस्य सिद्धिस्त्रिधा भवेत् ।**

उत्तममध्यमाधमरूपा । एवं ध्यानसिद्धिमुक्त्वा, तस्यैव जपसिद्ध्युचितं क्षेत्रमादिशति–

**महेन्द्रे मलये सह्ये पारियात्रेऽर्बुदे तथा ।।३६।।**

---

वायव्य दिग्विभाग में स्थित पद्मदल पर शार्वी, बर्बरी, सर्वगा और रौद्री देवियाँ न्यस्तव्य हैं । ये सभी धूम्रवर्णी, अन्यन्त चञ्चला और ध्वज धारण करने वाली हैं । इसी के साथ ही उत्तर की दलीय देवियाँ धवलवर्णा गदा और खेटक धारण करने वाली मानी जाती हैं । इसी तरह ईशान दल पर अवस्थित स्फटिकवत् पारदर्शी कान्ति से कमनीय देवियाँ, जिन्हें हम रोषणी, द्रावा, रुद्रा और भयापहारिणी प्रशासनी संज्ञा से विभूषित करते हैं, ये त्रिशूल धारिणी होती हैं । इसके अतिरिक्त श्लोक ३१ के विशेषणों से भी ये विशिष्ट होती हैं ।।३४।।

भगवान् भैरव भट्टारक देवी पार्वती को सम्बोधित कर कह रहे हैं कि, जो शक्ति के इस चक्र में न्यस्तव्य देवियों के साथ ध्यान के अभ्यास में लगे रहते हैं, वे लोग छः माह की इस ध्यानसाधना के बल पर त्रिधा सिद्धि के अधिकारी हो जाते हैं । यह त्रिधा सिद्धि उत्तमा, मध्यमा और अधम रूपा मानी जाती है ।।३५।।

यह ध्यानसाधना बड़े ही धैर्य की अपेक्षा रखती है । इसके लिये शान्त और नितान्त एकान्त की आवश्यकता होती है । जैसे पर्वतीय क्षेत्रों में महेन्द्र, मलय, सह्य, पारियात्र, अर्बुद, विन्ध्य, श्रीशैल अथवा कोल पर्वत ये आठों सिद्धिप्रद पर्वतों के रूप में प्रसिद्ध हैं । साधना के लिये सुविधानुसार इनका आश्रय ग्रहण करना उचित ही है ।।३६।।

**विन्ध्ये श्रीपर्वते चैव तथा कोलगिरौ प्रिये ।**

एतान्यष्टौ सिद्ध्यनुगुणानि पर्वतस्थानानि ।

किञ्च,

**गङ्गायमुनासंबाधे कुरुक्षेत्रे वरानने ।।३७।।**

**गङ्गाद्वारे प्रयागे च ब्रह्मावर्ते समास्थितः ।**

सम्बाधः संकटं संमिश्रयोस्तयोः यावती प्रवाहभूमिः । सरस्वतीचर्मण्वत्योरन्तरस्थो देशो ब्रह्मावर्तः ।

**अन्तर्वेद्यां सुपुण्यायां नर्मदायां तथैव च ।।३८।।**

गङ्गायमुनाप्रवाहयोर्मध्यमन्तर्वेदी । नर्मदायामपि तत्तटे ॥३८॥

किञ्च,

**सुस्निग्धदेशे भूभागे पद्मषण्डैर्मनोरमे ।**

पद्मषण्डैर्मनोरमो यः सुस्निग्धो देशस्तत्र भूभागे इति योजना ।

किञ्च,

**येषु येषु प्रदेशेषु स्वयंभुर्भगवाञ्छिवः ।।३९।।**

**तेषु स्थानेषु देवेशि नियमस्थो जितेन्द्रियः ।**

**वाङ्निरुद्धः प्रसन्नात्मा लक्षाक्षरजपे रतः ।।४०।।**

---

नदियों की दृष्टि से यदि विचार किया जाय तो शास्त्रवाक्य है कि, गंगा और यमुना का संगम स्थल उत्तम सिद्धिप्रद होता है । इसके अतिरिक्त कुरुक्षेत्र, गङ्गाद्वार (गंगोत्री) प्रयाग और ब्रह्मावर्त्त का भूभाग इस कार्य के लिये उत्तम है ॥३७॥

अन्तर्वेदी, पवित्र नर्मदा और उसके तट के पावन स्थान भी साधना की स्थली के रूप में प्रसिद्ध हैं । आवश्यकता और सुविधानुसार प्रबन्ध करना ही चाहिये । यह ध्यान रहे कि साधना भूमि अत्यन्त स्निग्ध और चिकनी मिट्टी की स्थली हो । आस पास के तालाबों आदि में कमल खिले हों, और सारा वातावरण प्रदूषण मुक्त हो ॥३८॥

जिन जिन स्थानों, भूखण्डों, या प्रदेशों में स्वयंभू भगवान् शिव विशेष रूप से ज्योतिर्लिङ्गों में आविर्भाव हुआ है, वे स्थान भी अति प्रशस्त माने जाते हैं । इन तथ्यों पर ध्यान देने के बाद ही साधनास्थली का चयन होना चाहिये ॥३९॥

इस प्रकार के पुण्यप्रद पवित्र स्थानों में हे देवेश्वरि ! जितेन्द्रिय साधक शौच, सन्तोष, तप, ईश्वरप्रणिधान आदि में निष्ठ अपने स्वीकृत व्रत में अवस्थित

**शाकभक्ष्यः फलाहारी नीवाराद्यशने रतः ।**
**त्रिकालपूजानिरतोऽथाग्निकार्यपरायणः ॥४१॥**
**भावितात्मा महासत्त्वो रक्षायाश्च विधानवित् ।**

यः–

**तस्य मन्त्रः प्रसिद्ध्येत्तु**

स च–

**साधयेत्सचराचरम् ॥४२॥**

स्वयंभूनामनुग्रहार्थमेवावतीर्णत्वात् तत्क्षेत्रस्य सातिशयं सिद्धिप्रदत्वम् । नियमस्थ इति शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधाननिष्ठः । वाक् च निःशेषेण रुद्धा जपैकनिष्ठीकृता येन, प्रसन्नः, त्यक्तसंगसंस्कार आत्मा मनो यस्य, लक्षाक्षरजपे रत इति प्राग्वद् द्वात्रिंशता लक्षैः सदशांशहोमैः, न तु यथान्ये अक्षरं मन्त्रस्तस्य लक्षेणैकेनेति अक्षरशब्दस्य मन्त्रवाचित्वाभावात्–

'........लक्षेणाक्षरसंख्यया' । (६/५१)

इति प्राक्तनोक्त्यविशेषप्रतिभासनादेतस्या उक्तेः । न च षाण्मासिकस्य प्रोक्तचक्रध्यानस्य काचिदनुपपत्तिः, तस्यैतज्जपसंख्याविधिं विना शुद्धस्यैव प्रोक्तफलहेतुत्वात् । न च ध्यानमात्रात्सिद्धिर्न भवतीति वाच्यमागमेषु शतशस्तत्प्रतिपादनात्, जपे तु तथोचितं ध्यानं न प्रत्याचक्ष्महे । यदि प्रोक्तचक्रध्यानं मन्त्रजपेऽङ्गं स्यात्, तच्चक्रदेवीनामपि जपनियममभिदध्यादित्यलम् । भावितात्मा आश्वस्तहृदयः, अत एव महासत्त्वः सावष्टम्भोऽत्यन्तशुद्धचित्तः । रक्षाया दिग्बन्धास्त्रप्राकारादिरूपायाः चकारात् क्षेत्रपालबल्यादेः विधानविदितिकर्तव्यताज्ञः ॥४२॥

---

होकर नियमित रूप में साधना में प्रवृत्त हों । साधना के प्रधान आचारों में सर्व प्रथम मौन को ही महत्त्वपूर्ण माना गया है । इससे वाणी की तपस्या पूरी होती है । आत्मा के स्तर तक प्रसन्नता का उल्लास रहना आवश्यक होता है । जप का संकल्प ३२ लक्षाक्षर से कम नहीं (६/५१) रहना चाहिये । साधक को निश्चित रूप से शाकाहारी होना चाहिये । इसमें फलाहार करना स्वास्थ्य प्रद होता है । अन्न नीवारक सदृश हल्की वस्तुएँ होनी चाहिये । तीनों काल की सन्ध्या पूजा करनी चाहिये । अग्निहोत्र प्रतिदिन करना चाहिये । नित्य स्वात्म में परमात्मत्व का भावन, स्वात्म सुरक्षा में दत्त चित्र महासत्त्व पुरुष की साधना अवश्य ही फलवती और सम्यक् रूप से सिद्ध होती है । ऐसा पुरुष अपने परम पुरुषार्थ द्वारा सचराचर को साध लेने में समर्थ हो जाता है ॥४०-४२॥

यदुक्तं साधयेत्सचराचरमिति, तत्संक्षेपेण दर्शयन्, भाविपटलप्रमेयवस्तु कटाक्षयति–

**कालाग्निर्नरकाश्चैव पाताला हाटकेश्वरः ।**
**सप्तलोकं सब्रह्माण्डं पञ्चाष्टकमतः परम् ।।४३।।**
**देवयोन्यष्टकं चैव प्रधानपुरुषान्तकम् ।**
**नियतिः कालतत्त्वं च रागो विद्या कला तथा ।।४४।।**
**माया विद्येश्वरं तत्त्वं सादाख्यं शक्तिगोचरम् ।**
**सर्वं सिद्ध्यत्यनायासान्मन्त्रराजप्रभावतः ।।४५।।**

एतत्समनन्तरपटलनिर्णेष्यमाणं शक्तितत्त्वान्तं सर्वं साधकस्य वशे भवत्यतश्च शिवरूपः साधको जायत इति यावत् ।।४५।।

यत्र चेयद्विश्वमस्य वर्तते, तत्र दण्डापूपीयन्यायो मितसिद्धीनां स्थित एवेत्याह–

**पूर्वोक्तं कर्म वै क्षिप्रमधमं मध्यमोत्तमम् ।**
**साधयेन्नात्र सन्देहो भैरवस्य वचो यथा ।।४६।।**

अधमादि प्राग्वत् । मारणोच्चाटनवश्याकर्षणशान्तिकाप्यायनादि च यदधमादि कर्म पूर्वमुक्तम्, तदपि यथोक्तद्रव्ययुक्तिसहकृतमयं मन्त्रराजः, पूर्वोक्तन्यायेनैव जपलक्षेण सहोमेनाराधितः साधयतीति सिद्ध एवायम् । भैरवस्य यथैव वचस्तथा अत्राश्वस्तव्यम् । आश्वासो हि अकम्पः सिद्धिलिङ्गम् ।।४६।।

---

सचराचर शब्द श्लोक ४२ में प्रयुक्त है । इसके सम्बन्ध में संक्षेप रूप से कह रहे हैं–

कालाग्नि, नरक, पाताल, हाटकेश्वर, सप्तलोक, सब्रह्माण्ड, पञ्चाष्टक लोक, देवयोन्यष्टक, प्रधान और पुरुष लोक, नियति, काल, राग, विद्या और कलादि के माया से सम्बद्ध लोक, विद्येश्वर तत्त्व लोक, सादाख्य और शक्ति तत्त्व लोक तक मन्त्रराज के प्रभाव से अनायास ही सिद्ध हो जाते हैं ।।४३-४५।।

इस वचन से यह स्पष्ट हो जाता है कि, मन्त्रराज के साधन से जब इतनी महत्त्वपूर्ण शक्तितत्त्वान्त सिद्धियाँ अनायास ही सिद्ध हो जाती हैं, तो सामान्य सिद्धियों की क्या बात हो सकती है ? इसी आधार पर कह रहे हैं कि, ग्रन्थ में पूर्व प्रतिपादित मारण, उच्चाटन, वशीकरण, आकर्षण, स्तम्भन, शान्तिक और आप्यायन आदि अधम, मध्यम और उत्तम कार्य तो लक्षाक्षर जप और होम से पुष्ट मन्त्रराज निश्चित रूप से सिद्धिप्रद होता है । इसमें सन्देह का कोई प्रश्न ही नहीं है । यह साक्षात् भैरव भट्टारक के मुखारबिन्द का मधु है । यह आश्वास अकम्प सिद्धि का लक्षण है ।।४६।।

अथ योग्यतमसाधकविषयमेतदेव दर्शनं द्वात्रिंशद्देवताचक्रपरिवारं विना एकवीरं निरूपयितुमाह–

**अथैकवीरमाश्रित्य अङ्गषट्कसमन्वितम् ।**
**जातियोगयुतं कृत्वा अष्टपत्रे कुशेशये ।।४७।।**
**पूजयेत्पूर्वविधिना**

एकमेव देवीपरिवाराद्यपरिवृतं वक्त्राङ्गषट्कमात्रसहितम्, वीरं साधकानां मुक्तिपर्यवसिततत्तत्सिद्धिसाधनायोद्यतम्, परमेश्वरं पूर्वोक्तविधिनेति 'भस्मोद्धूलित-देहस्तु' (९/१८) इत्यादिनोक्तेन सर्वेण क्रमेण पूर्वोक्त एव क्षेत्रे आराधनार्थं होमान्तेन विधिना पूजयेत् ।

ततः प्रोक्तसंख्याकं जपं होमं च प्रतिज्ञाय, तत्संपत्त्यै–

**जपहोमार्चने रतः ।**
**ध्यायन्नेव महादेवि स्वच्छन्दं परमेश्वरम् ।।४८।।**
**प्राप्नोति चिन्तितान्कामान्देवि नास्त्यत्र संशयः ।**

एवं साधकसिद्ध्यानुगुण्येनाराधनप्रकारानुक्त्वा रक्षाकल्पं प्रस्तावयितुमाह–

**अथ रक्षाविधानेषु अघोरं योजयेद्यथा ।।४९।।**

---

उक्त मन्त्र साधन मन्त्रराज के सकल देवी परिवार के साथ के मन्त्राराधन से सम्बद्ध है । इस कारिका में एकवीर मन्त्र के जाति प्रयोग के साथ अङ्गषट्क युक्त मन्त्राराधन के महत्त्व पर प्रकाश डालते हुए कह रहे हैं कि, अष्टदल कमल पर मात्र एकवीर अर्थात् आराधकों को मुक्ति सहित अनन्त फल प्रदान के लिये उद्यत निष्कल परमेश्वर की पूजा से ही अभीष्ट सिद्धि प्राप्त होती है । इसमें भी जप और होम आवश्यक है ॥४७॥

इस प्रकार जप, होम और अर्चन में प्रवृत्त साधक अनवरत अनन्त अनुग्रह अमृत के वर्षक स्वच्छन्द परमेश्वर के ध्यानमात्र से समस्त चिन्तित मनोरथों की प्राप्ति कर लेता है । भगवान् भैरव कह रहे हैं कि, देवि ! इस सत्य तथ्य पर अविश्वास नहीं करना चाहिये ॥४८॥

**मृत्युरक्षण प्रयोग–१–**

साधना के इस उपक्रम में रक्षा विधान भी एक अंग के रूप में स्वीकृत है । वही कहने जा रहे हैं–

<u>रक्षा विधान–यन्त्र</u> के लिये सर्वप्रथम अघोर का योजन होना चाहिये । उसकी एक विधि है । कार्य तो विधि के अनुसार ही करना चाहिये । भगवान् देवी को सम्बोधित कर कह रहे हैं कि, इसे एकाग्र भाव से अवश्य ध्यान देकर सुनो ॥४९॥

**तथाहं कथमिष्यामि तदेकाग्रमनाः शृणु ।**

तत्र–

**द्वात्रिंशदक्षरयुतं चक्रमालिख्य भामिनि ।।५०।।**
**नाभिकेसरसंयुक्तं सुसमं तु वरानने ।**
**गोरोचनां तु संगृह्य सिद्धालक्तकसंयुताम् ।।५१।।**
**दूर्वाकाण्डेन देवेशि हरितेन समालिखेत् ।**

सिद्धैः सिद्धार्थकैरलक्तेन च मिश्रां गोरोचनां कृत्वा दूर्वाकाण्डेन नीलेन तत् चक्रमर्थाद् भूर्जे लिखेत् । सिद्धालक्तकमलक्तकविशेष इत्यन्ये । सिद्धा भगवती चण्डिका, तत्पादाद्गृहीतेन कङ्कुमेनेति त्वसत् ।

अथास्य चक्रस्य–

**विद्याराजं कर्णिकास्थं बिन्दुनादसमन्वितम् ।।५२।।**
**शक्त्यवसानं देवेशि तस्मिन्साध्यं समालिखेत् ।**
**कषमध्ये वरारोहे नयनाद्यन्तरोधितम् ।।५३।।**
**ईकारवेष्टितं कृत्वा**

---

३२बत्तीस अरों वाला एक चक्र पहले लिखते हैं । यह चक्र भोजपत्र पर लिखना चाहिये । चक्र के मध्य में नाभि और केसर का निर्माण कर लेना चाहिये । चक्र समकोण या समवृत्त हो । गोरोचना को सिद्धार्थक और अलक्तक से मिश्रित करके भोजपत्र पर दूर्वाकाण्ड से लिखा जाना चाहिये । माँ भगवती के चरण से कुङ्कुम लेकर निर्मित अलक्तक कभी नहीं लेना चाहिये । उसे केवल माथे पर ही लगाया जा सकता है ।।५०-५१।।

इस चक्र की कर्णिका में शक्त्यन्त (ईकारान्त) बिन्दु-नाद समन्वित विद्याराज के बीजमन्त्र रखे जाते हैं । इसके अन्तर्गत आने वाले क्ष (क-ष) के बीच में साध्य का नाम लिखना चाहिये । नेत्र मन्त्र से इसे सम्पुटित करना भी आवश्यक है । सम्प्रदाय यह है कि, नेत्र मन्त्र पहले अनुलोम और साध्य नाम के बाद प्रतिलोम रूप से लिखना चाहिये । नेत्र मन्त्र भी ईकार रूप ऐश्वर्यशालिनी ईश्वरी के बीज मन्त्र से सम्पुटित करना चाहिये । इस प्रकार साध्य नाम त्रिसम्पुटित हो जाता है । १–ईकार से, २–नेत्रमन्त्र से और ३–क-ष से ।।५२-५३।।

विद्याराजं नवात्ममन्त्रम्, कर्णिकास्थमिति द्वात्रिंशदरचक्रनाभिगतकमल-कर्णिकागतमिति यावत्, बिन्दुनादशक्तयोऽत्र लिपिक्रमेण लेखितव्याः । साध्य-मिति तन्नाम, एवं चाभिदधद्वाच्यस्य वाचकाभिन्नत्वमीशेच्छाकृतमिति सूचयति । कषमध्य इति नवात्मसम्बन्धिनः क्षकारस्य यौ ककारषकारौ तयोर्मध्य इति, कादुत्तरस्य षस्य प्रथमभागे । नयनेन त्र्यक्षरेण पूर्वोक्तेन नेत्रमन्त्रेण, रोधितमिति सम्पुटीकृतम् । तत्र च नेत्रमन्त्राक्षराणामादावनुलोमक्रमः पश्चात्प्रतिलोमक्रम इति सम्प्रदायः । ईकारवेष्टितं कृत्वेति मायाबीजमालिख्य तदीकारेण नेत्रमन्त्रसम्पुटितं तत्साध्यनाम त्रिवेष्टितं कषमध्ये लिखेदित्यर्थः ।

इत्थं कर्णिकायां लिखित्वा–

**अरकस्था निवेशयेत् ।**

**पूर्वोक्तदेवता देवि**

पूर्वोक्ता अरुणाद्या यथोक्तैकैकमन्त्राक्षररूपाः साध्यान्ते भगवत्संमुखत्वेन, न तु तत्पराङ्मुखतयेत्याम्नायोऽत्र ।

अथ–

**तद्गर्भे साध्यमालिखेत् ।।५४।।**

साध्यमिति तन्नाम ।।५४।।

कथम्–

**भवगर्भे तु तत्कृत्वा ईकाराख्येन वेष्टयेत् ।**

**त्रीन्वारांस्तु वरारोहे ध्यानयोगसमाश्रितः ।।५५।।**

भव इह प्रणवः, तत्पूर्वस्य देवीमन्त्रस्योक्तत्वात्, तस्य गर्भे मध्ये, तदिति साध्यनाम कृत्वा पश्चादुपरिवर्तिमायाबीजसत्केनेकारेण प्राग्वद्वेष्टयेत् । तदीदृगिति-कर्तव्यताविशेषितं साध्यनाम एकैकारानिविष्टदेवीमन्त्राक्षरमध्ये आलिखेदित्यर्थः ।

---

इसके बाद अरों में पूर्व २५-२८ मन्त्रोक्त देवियों का न्यास अपेक्षित है । ये देवियाँ ३२ अक्षर के मन्त्र के एक एक अक्षरों की देवियाँ मानी जाती हैं । इनका न्यास भी भगवत्सांमुख्य पूर्वक होना चाहिये । इन्हीं के गर्भ में साध्य नाम लिखा जाना चाहिये ।।५४।।

इस क्रम को इस प्रकार जानना चाहिये । १–भव अर्थात् ॐकार रूप प्रणव, २–विद्याराज मन्त्र, ३–कष गर्भ में साध्य नाम, ४–ईकार वेष्टित करे । ५–आठों अरों के प्रारम्भ में भी साध्य नाम लिखे ।

एवं घोशब्दस्य रेशब्दस्य अन्यस्य च प्रथमकुटिलभागात्मनि मध्ये एतद् लेखनीयम् । तथाभूतं चैतदेकैकं देवीमन्त्राक्षरं कर्णिकागतमन्त्रराजसम्मुखं पूर्वादि-क्रमेणारासु निवेशयेत् । ध्यानयोगसमाश्रित इति भगवतो देवतानां च स्वरूपं सिद्धिसमुचितयथोक्ताकारं ध्यात्वा तद्व्याप्तिं च भावयित्वा लिखेत् ॥५५॥

तदेवं लिखितमेतत्सर्वमेव चक्रम्–

**ऊर्ध्वे चैव तु संरोध्य क्रोंकारेण वरानने ।**

दिगष्टकेऽस्याष्टौ बहिः क्रोंकारा दातव्या इत्यर्थः ।

अथैतत्–

**इन्दुनाच्छुरितं कृत्वा पुष्पधूपैः प्रपूजयेत् ॥५६॥**

इन्दुः कर्पूरम् । पूजनं मध्यमन्त्रात् प्रभृति सर्वमन्त्रैः यथास्थानम्, यथा-लेखोत्पुंसनं न सम्पद्यते ॥५६॥

अथ–

**वेष्टयेच्चैव तद्भूर्जमरन्ध्रं निर्व्रणं समम् ।**
**पञ्चरङ्गकसूत्रेण वेष्टयित्वा वरानने ॥५७॥**

---

इस प्रकार मन्त्रराज की स्थिति चक्र की कर्णिका में होती है । अरों में चार चार मन्त्राक्षर नामादि देवियों के नाम के पहले भी साध्य नाम लिखें । आठ अरों का प्रारम्भ तो बीच की कर्णिका से ही होता है । ये सभी देवियाँ मन्त्रराज के सम्मुख ही मानी जाती हैं । इस तरह ८ दिशाओं के आठ अरों के मूल में साध्य नाम आठ बार लिख जाता है । इस प्रकार ध्यान पूर्वक लिखे इस चक्रराज का ध्यान बड़ा महत्त्वपूर्ण होता है ॥५५॥

इस चक्र के आठों अरों के अन्त में आठ 'क्रों' बीजाक्षर लिख कर इस चक्र का और भी महत्त्वपूर्ण बना देते हैं । इसके बाद कर्पूर आदि से इसकी पूजा की जानी चाहिये ॥५६॥

वह भूर्जपत्र जिस पर यह मन्त्र लिखा जाय, छिद्र आदि दोष रहित हो । भोजपत्र को अरों के अन्त से इस प्रकार मोड़े कि, पहला अक्षर न मुड़े । आचार्य अपने सम्प्रदायानुसार मोड़ देकर पुण्डिका बनावें । पुनः पञ्चरङ्गी सूत से उसे बाँध दें । सिक्थ अर्थात् मोम से उसे लपेट कर मधु में उसे रख दें । इस तरह यन्त्र के माध्यम में साध्य का भी आप्यायन हो जाता है ॥५७॥

**सिक्थेन मुटयेत्पश्चात् क्षौद्रमध्ये निधापयेत् ।**

सिक्थं मधूच्छिष्टम् । क्षौद्रं माक्षिकं सर्वौषधिरससारभूतमिति तन्मध्ये स्थापनं साध्यस्याप्यायनाय ।

अस्य रक्षाविधेः फलमाह–

**यदा मृत्युवशाघ्रातं कालेन कलितं प्रिये ।।५८।।**
**अरिष्टचिह्नितं ज्ञात्वा रक्षामेतां समालिखेत् ।**
**तस्य मृत्युर्न जायेत इत्येवं भैरवोऽब्रवीत् ।।५९।।**

यदाशब्दो भिन्नक्रमः समालिखेदित्यस्यादौ योज्यः । अस्य च पश्चात् तदेत्यध्याहार्यम्, तेन कालाधिकारप्रोक्तैरन्यैर्वारिष्टैः चिह्नितम्, तत एव च–

'एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् ।
तत्रैकः कालमृत्युः स्याच्छेषास्त्वागन्तवः स्मृताः' ।।

---

जब कोई व्यक्ति मृत्यु के वशीभूत होकर मृत्यु से आघ्रात होकर जीवन से निराश हो जाता है, तो उसे किसी की आशा नहीं रह जाती । उस नैराश्य के क्षण में यह यन्त्र आशापूर्ण दीप बन कर आता है । उस अरिष्ट ग्रस्त दशा का अनुभव करने के बाद आचार्य उस पर दया कर इस यन्त्र की रचना करता है । ऐसे निराश व्यक्ति की उम्र लौट आती है । वह यन्त्र धारण करता है और मृत्यु टल जाती है । यह भैरव का वचन है । अवश्य पूरा होता है । इसमें अविश्वास का कोई कारण इसमें नहीं है ।

श्लोक में यदा और तदा का क्रिया के साथ अन्वय करने पर ध्यान देना चाहिये कि, 'मृत्यु नहीं होती' इस वाक्य के सम्बन्ध में एक उक्ति द्वारा यह स्पष्ट किया गया है कि,

एक सौ एक बार मृत्यु की सम्भावना इस शरीर में रहती है । अन्तिम मृत्यु 'कालमृत्यु' कहलाती है । शेष आगन्तुक मृत्यु के रूप में ही प्रसिद्ध हैं ।

तन्त्र शास्त्र की इस उक्ति के परिप्रेक्ष्य में यह विचार करना पड़ता है कि, आगन्तुशत मृत्युओं से आघ्रात और एक कालमृत्यु से निर्धारित मृत्यु प्राप्त करने वाले संसारिक लोग होते हैं । इनमें से जो साध्य होता है, उसी की रक्षा के लिये गुरुदेव इस रक्षा-यन्त्र का निर्माण करते हैं । इस यन्त्र के महाप्रभाव से उक्त कोई भी मृत्यु पास नहीं फटक पाती है । यह स्वयं भगवान् भैरव भट्टारक के ही वचन हैं । लिपिमात्र से यह अशक्य कार्य कैसे हो सकते हैं ? इस प्रकार के संशय मन में कभी नहीं लाना चाहिये ।

इति स्थित्यागन्तुशतेनाघ्रातं कालमृत्युना च एकेन कलितं साध्यं ज्ञात्वा गुरुरिमां रक्षां यदा समालिखेत्, तदा तस्य मृत्युः कोऽपि न स्यादिति भगवतैवोक्तमेतदिति नात्र संशयितव्यं लिपिमात्रात् कथमेतद्भवतीति । यतः श्रीसर्ववीरश्रीभर्गशिखानिरूपितनीत्या लिपिरपि पराशक्तिप्रसररूपैव, अतो भगवतैवैवंप्रतिज्ञातत्वात् सत्यमेवैतन्मन्तव्यम् ॥५९॥

मृत्युरक्षणे प्रकारान्तरमाह–

**कपालीशस्य गर्भे तु नाम यस्य समालिखेत् ।**
**भूर्जपत्रे वरारोहे रोचनाया रसेन तु ॥६०॥**
**ओंकारपुटमध्यस्थं रोधितं नयनाक्षरैः ।**
**वौषड्जातिप्रयोगेण तस्य मृत्युर्न जायते ॥६१॥**

कपालीशः पूर्वोक्तः, तस्य गर्भे प्राग्वत्कषमध्ये । कीदृशं नाम ? ओंकारपुटमध्यस्थमाद्यन्तयोरोंकारसम्पुटीकृतम्, तथाकृतं च सत्पूर्वोक्तैर्नयनाक्षरैः वौषड्जातिप्रयोगेण पश्चात्कृतेनोपलक्षितैः, रोधितमिति प्राग्वदनुलोमप्रतिलोमक्रमाभ्यामाद्यन्तयोः सम्पुटीकृतम् । दिग्विशेषानुपादानादष्टासु दिक्षु इति । अत्र च प्राग्वद् दूर्वाकाण्डलेखनपूजनादिक्षौद्रमध्यनिधापनपर्यन्तं सर्वमनुसर्तव्यम् ॥६१॥

---

यह ध्यान देने की बात है कि, लिपि का लेख भी पराशक्ति का ही प्रसर माना जाता है । सर्व वीर शास्त्र और श्रीभर्गशिखा नामक शास्त्रों में इस तथ्य का पूर्णतया प्रतिपादन किया गया है । भगवत्प्रतिज्ञात तथ्य में असत्य के लिये कोई अवकाश नहीं होता ॥५८-५९॥

**मृत्युरक्षण प्रयोग– २–**

मृत्यु से रक्षा के अन्य उपाय भी शास्त्रों में वर्णित हैं । इसी प्रकारान्तर की चर्चा यहाँ कर रहे हैं–

कपालीश भैरवाष्टक के एक मान्य सदस्य हैं । इनके मन्त्र के गर्भ में वही साध्य का नाम लिखना चाहिये । जैसे पहले 'कष' के मध्य में लिखा गया था । ओङ्कार से यह नाम सम्पुटित होना चाहिये । ओङ्कार सम्पुटित साध्य नाम को नेत्रमन्त्र और वौषड् जाति से पूर्ववत् अनुलोम विलोम दृष्टि से सम्पुटित करना चाहिये । यहाँ किसी दिशा का उल्लेख न होने के कारण आठ अरों में अरुण आदि देवियों की चार चार के संश्लिष्ट क्रम के अनुसार न्यास करना चाहिये । इसे भी दूर्वाकाण्ड से लिखने की प्रथा है । तत्पश्चात् यथावत् पूजन वेष्टन, मोम से वेष्टन और मधु में आप्यायनार्थ रखने की प्रक्रिया अपनायी जाती है । इसके प्रयोग से मृत्यु का भय समाप्त हो जाता है ॥६०-६१॥

एवं परिवारस्थभैरवाष्टकाद्यन्तस्थकपालीशविद्याराजाश्रयेण रक्षाविधानेन मृत्युजयमुक्त्वा, प्रसङ्गात् कर्मान्तरसिद्धिमपि यन्त्रक्रमेणादिशति देवः–

**शिख्याह्वेन तु देवेशि साध्यनाम विदर्भयेत् ।**
**अनलार्णमधश्चोर्ध्वे साध्यार्णेषु नियोजयेत् ।।६२।।**

शिख्याह्वेन शिखिवाहनमन्त्रेण पूर्वोक्तन, विदर्भयेदिति–

'अभिधेयं भवेत्पूर्वं ततो मन्त्रः सकृद्भवेत्' ।

इति शास्त्रान्तरोक्तस्थित्यानुविन्यस्तमन्त्रं कुर्यात्, अनलार्णं रेफः, तदेकैकत्र साध्यनामाक्षर ऊर्ध्वाधो नियोजयेत् । इत्थं विदर्भितमेतदाग्नेयमण्डलान्तस्थवायुमण्डलसंस्थितं कुर्यात्, आग्नेयमण्डलं त्रिकोणं तद्बहिर्वायुमण्डलं षट्कोणं वर्तुलम् ।

एतच्च यस्य लिख्यते–

**तस्य वै जायते दाहः**

वाय्वाध्माताग्निदीपितत्वादग्निवर्णमध्यगताक्षरत्वात् शिखिवाहनविदर्भितत्वाच्च ।

---

**दाहजनक प्रयोग–**

इस प्रकार कपालीशादि भैरवों के मन्त्रों के माध्यम में 'मृत्युजित्' यन्त्र लेखन के बाद ऐसे यन्त्रों के प्रकार का उल्लेख कर रहे हैं, जिससे कर्मान्तरों की सिद्धि भी अनिवार्य रूप से होती है ।

शिखिवाहन भैरवाष्टक के द्वितीय भैरव हैं । इनका बीजमन्त्र 'हूं' माना जाता है । इस मन्त्र से साध्य नाम को विदर्भित करना चाहिये । इसका नियम यह है कि,

'अभिधेय पहले प्रयुक्त होता है और इसके बाद मन्त्र मात्र एक बार प्रयुक्त होता है' । इस उक्ति के अनुसार मन्त्र को अनुविन्यस्त करना चाहिये । श्लोक में प्रयुक्त 'अनलार्ण' शब्द का अर्थ बह्निबीज 'रेफ' माना जाता है । ह् र् ऊ म् इन चारों में रेफ दूसरे स्थान पर है । इस स्थिति में रेफ के ऊपर और नीचे अर्थात् पहले व बाद में अभिधेय का नाम लिखना चाहिये । इस प्रकार विदर्भित यह आग्नेय मण्डल अपनी आभा से यन्त्र को भास्वर बना देता है । यह आग्नेय मण्डल त्रिकोण होता है । वायु मण्डल षट्कोण होता है । इस षट्कोण के मध्य में ही त्रिकोण मण्डल को बना दिया जाता है ।।६२।।

यह यन्त्र जिस साध्य के नाम का होता है, उसके शरीर में भीषण दाह उत्पन्न हो जाता है । षट्कोण रूपी वायु से प्रज्वलित त्रिकोणात्मक अग्नि में वह

किं शिखिवाहनदिवर्भितमात्रमेव नामाग्नेयमण्डलान्तः क्रियते । न तन्मात्रमेव, किन्तु–

**फट्काराद्यन्तरोधितम् ।**

फट्कारान्तशिखिवाहनबीजविदर्भितमिति व्याख्यानमसत्, तथा वाक्यार्थस्याभावात् ।

एतल्लेखनानन्तरं च मन्त्रनाथं पूजयित्वा, एतच्चक्रमध्यगतमेव–

**ज्वलन्तं चिन्तयेत्साध्यं दिनानां सप्तकं यदि ।।६३।।**

ततस्तस्य–

**तत्क्षणाज्जायते दाहो भैरवस्य वचो यथा ।**

क्रोधराजप्रयोगेण मारणमाह–

**क्रोधराजनिरुद्धं तु श्मशानपटमध्यगम् ।।६४।।**
**श्मशानादलिना लेख्यं विषरक्तान्वितेन तु ।**
**यस्य नाम वरारोहे हुंफट्कारविदर्भितम् ।।६५।।**
**मारयेतिसमायोगात्क्रूरजातिसमन्वितम् ।**
**म्रियते सप्तरात्रेण यो रक्षाभिः सुरक्षितः ।।६६।।**

---

स्वयम् अनल अक्षर रेफ और शिखिवाहन से विदर्भित होने का ही यह परिणाम होता है । इसके अतिरिक्त शिखिवाहन के साथ फट् जाति के प्रयोग से आद्यन्त रोधित भी होता है । इस तरह सात दिन पर्यन्त लगातार साध्य को दाह से दग्ध होता हुआ अनुभव किया जाय, तो यह यन्त्र सिद्ध हो जाता है और चिन्तन के साथ ही उसके शरीर में दाह उत्पन्न हो जाता है ।।६३।।

**मारण प्रयोग–**

शिखिवाहन मन्त्र के साथ साध्य के प्रयोग का यह फल है । किन्तु क्रोधराज मन्त्र के साथ प्रयोग करने पर भयङ्कर परिणाम होता है । उस समय यन्त्र को श्मशानवस्त्र से (कफन से लपेट कर रखते हैं ।।६४।।

श्मशान के अलि अर्थात् अङ्गार (के कोयले) से और प्रेतरक्त रूपी विष के साथ स्याही बनाकर कफन पर ही हुंफट् जाति से अन्वित कर और क्रोधराज विद्या के मन्त्र से उसे निरोधित किया जाय, तो यह महाविनाशक यन्त्र बनता है ।।६५।।

सोऽपीति शेषः । श्मशानादलिः श्मशानाङ्गारः, तेन प्रेतरक्तविषमिश्रेण मषीं कृत्वा, प्रेतपटखण्डे यस्य नाम हुंफट्कारविदर्भितमित्यन्ते विन्यस्य हुंफट्-कारं कृत्वा, पश्चात्प्रागुक्तेन क्रोधराजेन निरुद्धमित्याद्यन्तरोधितम्, ततोऽपि मार-येत्यनेन युक्तम्, ततोऽपि क्रूरजात्या हुंफट् इत्यनेन समन्वितं लिख्यते, स रक्षाभी रक्षितोऽपि सप्तरात्रान्म्रियते । अत्र श्रीक्रोधराजरूपं शत्रुसंहारोचितमुग्रं चिन्त्यम् ॥६६॥

अथ शत्रोस्त्रासनाय विकरालप्रयोगमाह–

**विकरालो महादेवि ऊर्ध्वाधःपाशसंस्थितः ।**

**साध्यनाम्नस्तु देवेशि हुंफट्कारविदर्भिणः ॥६७॥**

**न क्षामयत्ययत्नेन**

यस्य साध्यनाम्नः प्रोक्तयुक्त्या हुंफट्कारविदर्भितस्य विकरालाख्यो मन्त्र-विशेषः चतुर्दिग्गतः प्रोक्तया मष्या लिख्यते, तस्यासावयत्नेन हेलयैव न क्षमते । **क्षामयतीत्यैशः पाठः ।**

किमस्य न क्षमणमित्याह–

**तस्य शत्रोर्भयं भवेत् ।**

अत्र च श्रीविकरालस्वरूपं मध्यस्थितस्य साध्यस्य चतसृषु दिक्षु त्रासकत्वेनोत्थितं चिन्तनीयम् ।

अथ मन्मथप्रयोगं वशीकारायाह–

**मन्मथेन युतं कृत्वा साध्यनाम वरानने ॥६८॥**

---

इस मन्त्र के साथ 'मारय' इस क्रिया का योगकर हुंफट् इस क्रूर जाति का प्रयोग करते हैं । ऐसे मन्त्र के कोप से अनेक रक्षा कवचों से रक्षित होने पर भी मात्र सात रात्रि में ही वह सुरधाम को सिधार जाता है ॥६६॥

यहाँ शत्रु को सताने और त्रस्त करने के लिये किकराल प्रयोग का उल्लेख कर रहे हैं–

भगवान् कह रहे हैं कि, देवि ! उक्त हुंफट् से विदर्भित साध्य नाम के ऊपर और नीचे विकराल बीज का चतुर्दिक् प्रयोग उसी श्लोक ६५ में प्रोक्त रोशनायी से लिखा जाय, तो यह ऐसा यन्त्र तैयार होता है, जिसे शत्रु आसानी से नहीं झेल पाता ॥६७॥

अर्थात् विना रक्षा का प्रबन्ध किये, वह जी नहीं सकता । उसे शत्रु का महान् भय उपस्थित हो जाता है । साध्य की चारों दिशाओं में विकराल बीज के प्रयोग के कारण चतुर्दिक् ताप से वह घिर जाता है ॥६७½॥

**ध्रुवाद्यं स्वाहयान्तेन रक्तध्यानसमन्वितम् ।**
**अमुकोऽत्र वरारोहे तद्दिशोऽभिमुखः स्थितः ।।६९।।**
**अमुकस्य वशं यातु जपहोमौ समाचरेत् ।**
**सप्ताहाद्वशमायाति इति शास्त्रस्य निश्चयः ।।७०।।**

पूर्वोक्तेन ह्व्ऊऔकारसमुदायात्मना सबिन्दुकेन पिण्डाक्षरेण मन्मथेन युक्तं यत्साध्यनाम, तदेव विभजति । अमुक इति अमुकस्य वशं यातु इत्येतदन्तं स्वाहया स्वाहाशब्देनान्तेनान्तस्थेन युक्तं कृत्वा च, ईदृशा प्रणवपूर्वेण मन्त्रेण रक्तध्यानसमन्वितमिति तं साध्यं रक्तं ध्यायन् तदवस्थितिदिगभिमुखः साधको यदि सप्ताहं जपं होमं च वशीकरणोचितैर्द्रव्यैः करोति, तदास्य साध्यो वशमायात्येवेत्यत्रार्थः । अत्र च यन्त्रप्रकरणादेतन्निश्चितं यदेवंविधं मन्त्रं लिखित्वा सम्पूज्य जपहोमौ कार्यौ ।।७०।।

मेघनादप्रयोगमुच्चाटनायाह–

**मेघनादावसाने तु नाम यस्य समालिखेत् ।**
**यकाराद्यन्तसंरुद्धं मन्त्रं फड्द्वितयान्वितम् ।।७१।।**
**प्रेतस्थाने निधाप्यैतद्भैरवं तत्र पूजयेत् ।**
**अक्षपुष्पैर्वरारोहे तद्दिशोऽभिमुखः स्थितः ।।७२।।**

---

**वशीकरण प्रयोग (मन्मथ मन्त्र)**

भगवान् आगे कह रहे हैं कि, देवि ! साध्य के नाम को मन्मथ से समन्वित करते हैं । आदि में ध्रुव (सकल मन्त्र) और अन्त में स्वाहा का प्रयोग करते हैं । इस प्रयोग में हमेशा रक्त ध्यान आवश्यक है और यह सोचते हैं कि, यह अमुक व्यक्ति इस विशिष्ट दिशा की ओर मुँखकर खड़ा है । वह अमुक व्यक्ति वश में हो जाय । इस तरह सोचते हुए साधक इस मन्त्र को एक सप्ताह लगातार जप करता है, तो वह अभीष्ट पुरुष के वश में अवश्य हो जाता है । यह शास्त्र का निर्णय है । इसमें जप और होम का यथोचित प्रयोग आवश्यक होता है ।।७०।।

**मेघनादेश्वर मन्त्र से उच्चाटन का प्रयोग–**

१–मेघनाद बीज के बाद साध्य नाम लिखना चाहिये । २–इसके बाद यकारादि+अन्त के अनुसार यः+साध्यनाम+यः+फट् यह मन्त्र लिख श्मशान भूमि में गाड़कर उसी स्थान पर मेघनादेश्वर की पूजा करनी चाहिये । यह मन्त्र भोजपत्र पर लिख कर श्मशान में ही मेघनाद की पूजा करनी चाहिये ।

**तमुच्चाटयते क्षिप्रं देवि नास्त्यत्र संशयः ।**

मेघनादो ह्र्‌य्ऊबिन्दुसमुदायात्मा । यकारेति सविसर्गयिकारसम्पुटितमित्याम्नायः । एतदित्येवं लिखितं भूर्जे । निधाप्येति श्मशानभूम्यन्तर्गतं कृत्वा । तत्र ईदृशे भूर्जे । अक्षा विभीतकाः । तदिति साध्यदिगभिमुखः । सप्ताहादिति स्थितमेव । स्पष्टमन्यत् ।

सोमराजप्रयोगं विभवार्थं वशीकृत्यर्थं चाह–

**सोमराजेन देवेशि आदिमध्यान्तसंयुतम् ।।७३।।**
**नाम यस्य समालिख्य वषड्जातिसमन्वितम् ।**
**सन्निधाप्य त्रिमधुरे स्थापयेत्सुरसुन्दरि ।।७४।।**
**सप्तरात्रप्रयोगेण त्रिकालाष्टशतेन च ।**
**असाध्यं साधयत्याशु धनं च विपुलं लभेत् ।।७५।।**

सोमराजो हुंकारस्तेन, साध्यनाम आदिमध्यान्तसम्बद्धं कृत्वेति नाम्न आदौ मध्येन्ते च त्रिः सोमराजं लेखित्वा, ततो वषडन्तं कृत्वा, तद्यन्त्रं सन्निधाप्य पूजयित्वा सिक्थसम्पुटितं क्षीरक्षौद्रशर्करापात्रसम्पुटगं कृत्वा, सप्तदिनं यस्त्रिसन्ध्यं तथैव जपेदसावसाध्यं साधयितुमशक्यमपि साधयति वशीकरोति, श्रियं चाप्नोति ।।७५।।

---

बहेरा के फूल से यह पूजा होती है । इसमें यह ध्यान रखना चाहिये कि, साध्य जिस दिशा में हो, उसी दिशा में साधक भी बैठे । इससे तत्काल लाभ होता है । शीघ्र उच्चाटन होता है ।।७१-७२।।

**सोमराज मन्त्र प्रयोग से वशीकरण–**

भगवान् कह रहे हैं कि, देवेश्वरि ! सोमराज के आदि, मध्य और अन्त में ४बार लिखे मन्त्रों के बीच बीच में ३बार साध्य नाम लिखे । अन्त में वषट् जाति का प्रयोग करे । जैसे (हुं शिव हुं शिव) इस तरह शिव के स्थान पर साध्य का नाम लिखे । इसे त्रिमधु में सिक्थ से संपुटित कर रखे । त्रिमुध (क्षीर, रौद्र (मधु) और शर्करा (चीनी) के सम्पुटित कर दें । सात रात्रों को इसका प्रयोग करें । त्रिकाल १०८ जप करें । इससे असाध्य की सिद्धि होती है और धन की भी प्राप्ति होती है ।।७५।।

पुनः प्रोक्तस्य क्रोधराजस्य जपहोमाभ्यां प्रयोगमुन्मादार्थमाह–

**पञ्चाङ्गेन पिशाचस्य क्रोधराजावसानिकाम् ।**
**संज्ञां समुच्चरेद्देवि क्रूरजातिसमन्विताम् ।।७६।।**
**उन्मत्तो जायते साध्यो होमेन च जपेन च ।**

पिशाचस्य विभीतकस्य मूलकाण्डपत्रकुसुमफलानि पञ्चाङ्गानि, तैर्मिलितं सप्ताहं प्रणवादिक्रोधराजहुंफडन्तं साध्यनामोच्चार्य, त्रिसन्ध्यमष्टोत्तरशतं यो जुहुयात्, तस्यासौ साध्यः शत्रुरुन्मत्तो भवति ।

पुनरप्यनुग्रहहेवाकितया मृत्युजिद्विधिमाह–

**मृत्युञ्जयं प्रवक्ष्यामि तमेकाग्रमनाः शृणु ।।७७।।**
**भूर्जपत्रं समादाय नीरन्ध्रं निर्व्रणं समम् ।**
**तस्मिन्समालिखेत्पद्ममष्टपत्रं सकर्णिकम् ।।७८।।**
**तस्मिन्वै कर्णिकामध्ये साध्यनाम समालिखेत् ।**
**संवेष्ट्याष्टौ दिशो देवि स्वच्छन्देन कृशोदरि ।।७९।।**

---

**क्रोधराज बीज मन्त्र प्रयोग–**

पिशाच अर्थात् विभीत का अर्थात् बहेरा के पाँचों अङ्ग (मूल, काण्ड, पत्र, पुष्प और फल) मिलाकर हवन सामग्री तैयार करें । इनके अतिरिक्त इनमें कुछ भी न डाले । इसी सामग्री से प्रणव सहित क्रोधराज मन्त्र में हुं फट् जाति को मिलाकर बने मन्त्र से साध्य नाम का उच्चारण करते हुए त्रिसन्ध्य अष्टोत्तरशत जप करते हुए हवन करें, तो वह साध्य पागल हो जायेगा । इसमें सन्देह नहीं ।।७६।।

**मृत्युजिद्विधि–**

भगवान् कह रहे हैं कि, देवि ! मैं मृत्युञ्जय विधि तुम्हें सुना रहा हूँ । इसे ध्यान पूर्वक सुनो । भोजपत्र ऐसा हो, जो नीरन्ध्र और निर्व्रण हो । उसमें अष्टदल कमल लिखना चाहिये । कमल में कर्णिका का स्थान निर्धारित हो । उसी कर्णिका के मध्य में साध्य का नाम लिखा जाय । देवि ! आठों दिशाओं को स्वच्छन्द मन्त्र से संवेष्टित करना चाहिये । स्वच्छन्द मन्त्र से यहाँ सकल मन्त्र ही ग्रहण करना चाहिये । उसे प्रणव से संवेष्टित करना चाहिये । इसके बाद कर्णिका की तरह प्रति पत्र में लिखना चाहिये । अर्थात् आठों पत्रों पर इसी तरह लिख कर प्रणव से आवेष्टित कर उसे रेखा से वृत्त में आवेष्टित कर उसी वृत्त की

**प्रणवेन तु संवेष्ट्य**

स्वच्छन्देनेति सिद्धिप्रदानेन सकलेन साध्यनामाष्टौ दिशश्चक्रवदावरणक्रमेण संवेष्ट्य ततः प्रणवेन संवेष्ट्य कर्णिकामध्ये लिखेदिति योजना ।

कर्णिकावत्प्रतिपत्रं लिखेदित्याह–

**पत्रेष्वेवं समालिखेत् ।**

अष्टस्वपि । किञ्च,

**पत्राष्टकेऽप्यघोरस्य नामाधस्तात्समालिखेत् ।।८०।।**

पत्रबाह्य आवरणक्रमेण व्योमरेखामित्यर्थः । एवं लिखित्वा प्रागवत् कर्पूरादिना पूरयित्वा सम्पूज्य विज्ञप्त्यर्थम्–

**वक्तव्यं देव संरक्ष शरणं त्वामुपागतम् ।**

साध्यमित्यर्थात् । तत एषा रक्षा सिक्थकादिना संवेष्ट्य पयसि क्षेप्या । पयसि क्षीरे निक्षिप्तमात्रैव सती साध्यस्य सद्योमृत्युविनाशिनीति कर्णिकायां लिखित्वा तल्लग्नेषु अष्टसु पत्रेषु एवमेव लिखेत् ।

अथ शान्तिकमाह–

**आदौ त्र्यक्षरविन्यासं स्वच्छन्दं तदनन्तरम् ।।८१।।**
**जन्मनाम तु साध्यस्य अक्षरान्तरितं लिखेत् ।**
**पुनस्त्र्यक्षरविन्यासं वषडन्तं नियोजयेत् ।।८२।।**

नेत्रमन्त्राक्षराणि त्रीणि चतुष्कलं च लिखित्वा जन्मसमयकृतं साध्यनामाक्षरैरिति अर्थादघोरसत्कैरन्तरितमेकैकतदक्षरव्यवहितम्, 'अ देवदत्तः घो देवदत्तः' इत्यादिक्रमेण लिखित्वा पुनर्वषडन्तानि प्राग्वल्लिखेत् ॥८२॥

---

निचली रेखा पर अघोर भैरव का नाम चतुर्थ्यन्त नमः के साथ लिखे । इसे पूर्ववत् कर्पूर आदि से पूजित करें । तत्पश्चात् भगवान् से यह प्रार्थना करे कि, भगवन् देवाधिदेव ! तुम्हारी शरण में यह साध्य आया हुआ है । कृपा कर इसकी रक्षा करो भगवन् ! इसे मोम से मोड़कर यन्त्र का रूप दे और इस यन्त्र को दूध में छोड़ दें । दूध में पड़ते ही साध्य की सद्यो मृत्युविनाशिनी शक्ति जागृत हो जाती है ॥८०॥

**शान्ति के प्रयोग–**

नेत्र मन्त्र के तीन अक्षर, पश्चात् निष्कल स्वच्छन्द, साध्य के जन्म नाम के अक्षरों को अक्षरान्तरित रूप से लिखे और अन्त में वषड् का प्रयोग करें । सिक्थ से मोड़कर दूध में डालकर रखें । इससे परम शान्ति की अनुभूति होती है ।

इमां च रक्षां सम्पूज्य–

**मुटित्वा सिक्थकेनैव क्षीरमध्ये तु प्रक्षिपेत् ।**

इत्थं च साध्यस्य–

**जायते परमा शान्तिः**

किञ्च,

**पुनरन्यन्निबोध मे ।।८३।।**

कथम्–

**जुंसः संपुटमध्यस्थं प्रणवोभयसंयुतम् ।**

**नाम कृत्वा वरारोहे प्रक्षिपेन्मधुरत्रये ।।८४।।**

जुंस इत्यनेन प्राग्वत् प्रागनुलोमं पश्चात्तु प्रतिलोमं विन्यस्तेन सम्पुटीकृतं नाम पश्चात् प्रणवेन सम्पुटितं कुर्यादित्यर्थः । मधुरत्रयं प्राग्वत् ॥८४॥

इत्थं च–

**परां शान्तिमवाप्नोति मृत्युरोगैर्न बाध्यते ।**

साध्य इत्यर्थात् ।

पुनर्मृत्युजयप्रकारान्तरमाह–

**भूर्जपत्रं समादाय रोचनाया वरानने ।।८५।।**

---

भगवान् इसके अतिरिक्त शान्ति के अन्य प्रयोग की चर्चा के लिये देवी को सावधान कर रहे हैं । शान्ति के इस प्रयोग को सुनने के लिये देवी पूरी तरह तैयार हैं ॥८१-८३॥

**शान्ति के प्रयोग–**

नेत्र मन्त्र के सम्पुट में अनुलोम विलोम क्रम के मध्य में साध्य नाम रखे । सिक्थ (मोम) से मोड़कर मधुरत्रय में रखे । इससे वह साध्य पराशान्ति का अनुभव करता है । वह मृत्यु और मृत्युप्रद रोगों से एकदम बचा रहता है ॥८४॥

**मृत्युजित् प्रयोगों के प्रकारान्तर–**

भोजपत्र का चौकोर निर्व्रण पत्र लीजिये । गोरोचन की स्याही ले आइये । मातृकान्तरित नाम लिख जाइये । इसे दूब की शाखा से लिखना चाहिये । मातृकागर्भ में षोडश स्वरान्तरित नाम परिमण्डल रूप में पुनः

**मातृकान्तरितं नाम दूर्वाकाण्डेन चालिखेत् ।**
**तदभ्यन्तरगर्भे तु स्वरैरन्तरितं कुरु ॥८६॥**
**पुनर्गर्भे समालिख्य साध्यनाम वरानने ।**
**ध्रुवेण वेष्टयेत्पश्चाद्वकारेण ततः प्रिये ॥८७॥**
**सकारं च क्षकारं च लिखेच्च तदनन्तरम् ।**
**पुनर्वेष्ट्य ठकारेण मायाबीजेन सुव्रते ॥८८॥**
**अङ्कुशेन निरुन्ध्येत रक्षां मृत्युविनाशिनीम् ।**
**स्वच्छन्दसहितां देवि प्रणवेनादियोजिताम् ॥८९॥**
**वषड्जातिसमोपेतां कर्पूरक्षोदचर्चिताम् ।**
**गन्धपुष्पादिना पूज्य प्रक्षिपेन्मधुरत्रये ॥९०॥**

गर्भे साध्यनाम । प्रणवेनादियोजितामपि प्रणवान्तर्गर्भीकृतां विधाय स्वच्छन्दसहितां वषड्जातिसमोपेतां रक्षां कृत्वेति गर्भीकृतनाम्नः प्रणवस्य बहिर्घोरं वषडन्तं परिवेष्टनया लिखेत्, तच्च 'तदभ्यन्तरगर्भे तु स्वरैरन्तरितं कुरु' इति बहिर्विन्यस्तकादिक्षान्तमातृकाया अभ्यन्तरे षोडशभिः स्वरैरन्तःकृतैः परिमण्डलेन लिखितैर्व्याप्तं करणीयं यदाह–मातृकान्तरितमिति । एतच्च सर्वं पुनर्ध्रुवेण वेष्टितं सत् क्रमेण वकारसकारक्षकारठकारैर्वेष्टयेत् । तदनु मायाबीजसत्केकारेण त्रिर्वेष्टयेत् । पश्चादष्टसु दिक्षु क्रोंकारेण रोधयेदिति व्यवहितवाक्यार्थसंगत्यनुसारेण चक्रमेतत्प्रदर्शितम् ॥९०॥

---

लिखें । इसके बाद इस वृत्ताकार लिखे । मातृका मण्डलान्तरित साध्य नाम को ध्रुवमन्त्र से वेष्टित करें । फिर 'व' से पुनः 'स' से पुनः 'क्ष' से और इन तीनों को भी 'ठ' से वेष्टित करें । इस वेष्टित मण्डल को मायाबीज ह्रीं या ईंकार से तीन बर वेष्टित करें । पुनः आठों दिशाओं में 'क्रों' लिखें ।

भगवान् कह रहे हैं कि, देवि परमेश्वरि ! यह मृत्यु–विनाशिनी यन्त्र-विद्या है । यह स्वच्छन्द भैरव से समन्वित प्रणवादि विद्या है । अन्त में इसमें वषट् योग देना चाहिये । कर्पूर और मधु से चर्चित मन्त्र को गन्ध पुष्प आदि के द्वारा इस यन्त्र की पूजा करनी चाहिये । पूजा करके त्रिमधु में इसे रखें । इस प्रकार इस यन्त्र से मृत्यु पर भी विजय का ध्वज फहराया जा सकता है ॥८५-९०॥

अर्चयित्वा चैतत्सिक्थकेन मुटितं मधुरत्रये यस्य क्षिप्यते, तस्य–

**जायते परमा शान्तिर्नात्र कार्या विचारणा ।**

निश्चितमतिनैतत्प्रयुक्तमभीष्टं साधयत्येव ।

**अथवा गुटिकां कृत्वा कण्ठे बाहौ च धारयेत् ।।९१।।**

यः–

**तस्य व्याधिर्न जायेत इत्येवं भैरवोऽब्रवीत् ।**

गुटिकां कृत्वा इति जतुबद्धां कनकादिभूषितां विधाय कण्ठे भुजे वा धारयेत् । चो वार्थे ।

गुटिकां विना विशिष्टमन्त्राभिमन्त्रितभोजनपानक्रमेण सततं क्रियमाणेन मृत्युजिद्विधिमाह–

**त्र्यक्षरं मूलमन्त्रं च वषड्जातिसमन्वितम् ।।९२।।**
**भोजनोदकपाने तु मन्त्रयित्वाश्नतः सदा ।**
**न तस्य जायते मृत्युर्भैरवस्य वचो यथा ।।९३।।**

नेत्रमन्त्रचतुष्कलनाथाभ्यां वषडन्ताभ्यां भोजनपाने द्वे सततमभ्यवहरतो न मृत्युर्भवति ।।९३।।

---

जिस साध्य का नाम इस यन्त्र में दिया गया है । उसे यह आनन्द के अमृत से आप्यायित करता है । उसके जीवन में परम शान्ति का अनुभव होता है । इसमें सन्देह के लिये कोई अवकाश नहीं है । हाँ इस यन्त्र को भी मोम में लपेट कर त्रिमधु में रखना आवश्यक होता है । इसके साथ श्रद्धा और विश्वास का सम्बल आवश्यक माना जाता है । अथवा इस यन्त्र की गुटिका बनाकर गले में धारण करने से भी उसी तरह अनन्त फलों की अवाप्ति होती है । इस यन्त्र को बाहु में भी धारण कर सकते हैं ।।९१।।

जिसके हाथ गले या शिरो भाग में यह यन्त्र रहता है, उसे किसी प्रकार की व्याधि नहीं होती, यह स्वयं भैरव का वचन है । विना गुटिका के उक्त विशिष्ट मन्त्रों से समन्वित और अमान्त्रिक भोजन पान करने वाले लोगों के लिये एक नयी विधि का प्रदर्शन कर रही है । १–त्र्क्षर मन्त्र,+२–चतुष्कल मूल मन्त्र+ ३वषड् जाति के मन्त्रोद्धार से निष्पन्न मन्त्र से भोजन पान करने वाले लोगों का भी मृत्यु नहीं होती । यह भैरव का वरदान है ।।९२-९३।।

अथ विषादिहेतुर्यस्यापि मृत्युर्न, तं समादिशति–

**अथाहिना महादेवि दूषितः साधको यदा ।**

तदा–

**मूलमन्त्रसमोपेतमघोरं तत्र योजयेत् ।।९४।।**

मूलमन्त्रः श्रीचतुष्कलः, तेन समोपेतं सम्पुटीकृतम्, तत्रैति अहिदूषण-प्रशान्तिनिमित्तम् । अस्यान्ते 'भगवन्विषं शमय २ हुंफट्' इति क्रूरजात्यन्तः ऊहः प्रयोक्तव्य इत्यर्थात् ॥९४॥

प्रयोगावसरे च–

**आत्मनो भैरवं रूपं कृत्वा चैव सुदारुणम् ।**
**दंष्ट्राकरालविकटं ज्वालामालोपशोभितम् ।।९५।।**
**सर्पैर्ललल्लम्बमानैः खड्गहस्तं सुभीषणम् ।**
**पूर्वरूपसमोपेतं सूर्यकोटिसमप्रभम् ।।९६।।**
**तेनाक्रान्तं महादेवि दष्टकं तु विचिन्तयेत् ।**
**तज्ज्वालाभिः सुदीप्ताभिर्दग्धं संचिन्तयेद्विषम् ।।९७।।**

---

महादेवी को सम्बोधित कर भगवान् भैरव कह रहे हैं कि, देवि ! कभी ऐसा होता है कि, शिव भक्तों को साँप डस लेते हैं । ऐसी अवस्था में मूल मन्त्र अर्थात् चतुष्कल नाथ, इससे सम्पुटित अघोर मन्त्र के बाद 'भगवन् ! विष को शमन करो, शमन करो हुं फट्' इसका संस्कृत वाक्य अवश्य लगाकर मन्त्र का प्रयोग करना चाहिये । इससे विष का शमन हो जाता है ॥९४॥

जिस समय यह प्रयोग किया जाय, उस समय प्रयोक्ता अपने को भैरव रूप में आकलन करे और भैरव के भयप्रद भीषण रूप को देखे । साथ ही दंष्ट्रा से कराल विकटाकार रूप में अवस्थित, सर्पहार के पहले भैरव को ज्वालामाल से जाज्वल्यमान माने । हाथ में नंगी तलवार, कोटराक्ष के समान भीषण, करोड़ों सूर्य के समान चमकीले भैरव के द्वारा आक्रान्त उस भक्त को भी आकलित करें ।

इस तरह भगवान् भैरव की ज्वालाओं से दग्ध होकर शिव भक्त के ऊपर चढ़ा भयङ्कर जहर तत्काल शान्त होने लगता है । कुछ देर तक के इस प्रयोग से भक्त के प्राणों पर आ पड़े दारुण संकट से बचा जा सकता है । भगवान् भैरव का प्रत्यक्ष अनुग्रह उसे नया जन्म देता है । वह अब निर्विष हो जाता है ॥९५-९७॥

**तत्क्षणाद्देवदेवेशि निर्विषः स तु जायते ।**

कृत्वेति ध्यात्वा, सर्पैरिति हारकटकादिस्थैरुपलक्षितम्, पूर्वरूपं श्रीकोटराक्षसम्बन्धि । अहिदूषितत्वं विषदूषितत्वोपलक्षणपरम् ।

किञ्च,

**ग्रहेष्वेवंविधं ध्यानं यः कुर्यात्**

सः–

**मोचयेत्क्षणात् ।।९८।।**

तेभ्योऽपस्मारादिग्रहेभ्यः साध्यमित्यर्थात् । अत्र च 'भगवन्नस्य साध्यस्य ग्रहं शमय शमय हुंफट्' इत्यन्तपूर्वोक्तमन्त्राभिमन्त्रितेनाम्भःकुसुमादिना साध्यं ताडयेदित्यर्थात् ॥९८॥

ध्यानासमर्थं प्रति विषशमनं कारुणिकत्वादोषधिप्रयोगैरप्यादिशति शम्भुः–

**अथ ध्याने ह्यकुशलो यदा कश्चिन्नरो भवेत् ।**
**तदागदैर्महादेवि निर्विषं कुरुते क्षणात् ।।९९।।**

दष्टं भक्षितविषं च ॥९९॥

अगदमाह–

**कुमारिद्वितयं गृह्य नागिन्या तु सहैकतः ।**
**गोकर्णिकासितं मूलं सोमाह्वामूलसंयुतम् ।।१००।।**

---

ग्रहों की पीड़ा में भी इस प्रकार के ध्यान से बड़ा कल्याण होता है और ग्रहग्रस्त व्यक्ति का तत्काल उद्धार हो जाता है । अपस्मार आदि भी एक प्रकार के ग्रह ही हैं । इस मन्त्र से अभिमन्त्रित करना और मन्त्र पाठ करना भी आवश्यक है । कुसुम आदि से साध्य का ताडन भी करते रहना चाहिये ॥९८॥

विष चढ़ रहा हो, ध्यान आदि की क्रियाओं में वहाँ कोई समर्थ न हो, उस समय विषहर ओषधियों से भी काम लेकर विष के शमन में प्रवृत्त होना चाहिये । विष शमन के वे प्रकरण भी इसी में जोड़ना चाहिये, जिसमें कोई विष खाकर मर रहा हो । वहाँ भी यह प्रयोग काम करता है ॥९९॥

**पहला प्रयोग–**

१–घृतकुमारी चाहे वह फलवती हो या बन्ध्या हो, दोनों ग्राह्य हैं । २–नागिनी (महागोनासा) इन दोनों को गाय के दूध में पीसकर पिलाना चाहिये ।

**आमगोक्षीरसंपिष्टं भक्षयेन्निर्विषो भवेत् ।**

कुमार्याख्यौषधिः सफला वन्ध्या चेति द्विरूपापि, नागिन्या महागोनासाह्वया सह गोक्षीरपिष्टमित्येकः प्रयोगः । गोकर्णिका गिरिकर्णिका, सोमाह्वा सोमराजी, सितं मूलं गोक्षीरपिष्टमिति द्वितीयः, क्षीरेण पिष्टमप्येतद्घृतेन सह पाने नस्ये वा प्रयोक्तव्यम् । यद्वक्ष्यति–

'अगदान्घृतसंयुक्तान् पिबेत्.......'। (१०८) इत्यादि ॥

किञ्च,

**गोनिम्बस्य च मूलेन निर्विषत्वं प्रजायते ।।१०१।।**

गोनिम्बो भूम्यामलकी । क्वचित्तु ऐरण्डस्य मूलेनेति पाठः । अत्रापि आमगोक्षीरपिष्टत्वं स्थितमेव ॥१०१॥

**अश्वमारस्य मूलं तु उदकेन तु पेषयेत् ।**
**पाने नस्ये प्रदातव्यं तदा भवति निर्विषः ।।१०२।।**

अश्वमारः करवीरकम् ॥१०२॥

**आरग्वधस्य मूलं तु उदकेन च पेषयेत् ।**
**पाने नस्ये प्रदातव्यं तदा भवति निर्विषः ।।१०३।।**

आरग्वधमारोचकमिति प्रसिद्धम् ॥१०३॥

---

**दूसरा प्रयोग–**

१–गो कर्णिका (गिरिकर्णिका) २–सोमा (सोमराज), इन दोनों के सफेद जड़ों को गाय के दूध में पीसकर पिलाने से विष की शान्ति होती है ।

**तीसरा प्रयोग–**

उक्त पिष्ट ओषधियाँ+घी के साथ लेने से या इनके रसका नस्य लेने से भी कल्याण होता है ।

**चौथा प्रयोग–**

गोनिम्ब (भूमि आँवला) की जड़ को भी पीने, लगाने और नस्य लेने से जहर उतर जाता है ॥१००-१०१॥

**पाँचवाँ प्रयोग–**

अश्वमार (कनेर, करवीर, कनइला) के मूल को पानी से पीस कर पीने और नस्य रूप में देने से व्यक्ति निर्विष हो जाता है ॥१०२॥

**छठाँ प्रयोग–**

आरग्वध (आरोचक) की जड़ को पानी से पीसकर पीने और रस को नस्य लेने से भी व्यक्ति निर्विष हो जाता है ॥१०३॥

**मधुकस्य तु सारं यन्नस्ये पाने प्रयोजयेत् ।**
**निर्विषस्तु प्रजायेत भैरवस्य वचो तथा ।।१०४।।**

मधुकस्य मधूकस्य सार आन्तरो भागस्तं द्वयो: प्रक्रान्तत्वाद् उदकेन क्षीरेण वा पिष्ट्वा, नस्ये पाने प्रदातव्यम् । मधुकं मधुयष्टिरित्यन्ये ॥१०४॥

**जम्बूलासिकमूलं तु पाने नस्ये प्रयोजयेत् ।**
**निर्विषस्तु भवेद्देवि नात्र कार्या विचारणा ।।१०५।।**

जम्बुलासिकमूलं जम्बूवृक्षमूलम् । अत्रापि गोक्षीरपिष्टमिति स्थितमेव ॥१०५॥

**अथ** विषानाक्रमणहेतुमगदगुटिकाप्रयोगमाह–

**षड्बिन्दुपटखर्जूरसूक्ष्मचूर्णं तु कारयेत् ।**
**मयूरपित्तसंयुक्तं गुटिकां कारयेत्प्रिये ।।१०६।।**
**त्रिलोहवेष्टितां कृत्वा करे कण्ठे निधापयेत् ।**
**न विषं क्रमते तस्य यश्च दष्टो महोरगैः ।।१०७।।**

षड्बिन्दु: प्राणिविशेष: । पटखर्जूरं शतपदी गुटिकां कारयेदित्यनन्तरं तां चेति, निधापयेदित्यनन्तरं यत इति चाध्याहार्यम् । त्रिलोहं हेमरजत-ताम्रम् ॥१०७॥

---

**सातवाँ प्रयोग–**

मधुक (मधूक) मधुयष्टि (मुलहठी) का आन्तर सार भाग दूध या जल से पीस कर पीने या नस्य से व्यक्ति निर्विष हो जाता है ॥१०४॥

**आठवाँ प्रयोग–**

जम्बुलासिक (जामुन वृक्ष की जड़) को दूध या जल से पीसकर पीने या पीसकर निकले रस के नस्य से विषग्रस्त व्यक्ति निर्विष हो जाता है । ये सारे प्रयोग भैरव प्रोक्त हैं । अत: सत्य तथ्य पर निर्भर हैं ॥१०५॥

**गुटिका प्रयोग–**

षड् बिन्दु (जीव) छबुन्ना–यह बरसात में देहातों में बहुतायत से पाया जाता है । पटखर्जूर शतपदी (जीव) गोजरों को कहते हैं । इन दोनों का चूर्ण बनाना चाहिये । इसे बारीक चूर्ण में मोरपित्त मिलाकर गोली बनानी चाहिये । इस गोली या गुटिका को त्रिलोह (चाँदी, सोना और ताँबा) से वेष्टित कर कण्ठ में धारण करना चाहिये । इसके महाप्रभाव से भयङ्कर विषधरों से दष्ट होने पर भी जहर उन व्यक्तियों पर नहीं चढ़ता, जो इसे कण्ठ में धारण किये हुए हैं । ये प्रयोग आयुर्वेदकी दृष्टि से उपादेय हैं । जीवनदाता प्रयोग के कारण इन्हें हेय नहीं मानना चाहिये ॥१०६-१०७॥

अगदप्रयोगे शेषविधिमाह–

**अगदान्घृतसंयुक्तान्पिबेद्वै विषदूषितः ।**
**न विषं क्रमते तस्य इति शास्त्रस्य निश्चयः ।।१०८।।**

एतेष्वगदेषु वान्येषु वा पृथक्पृथक् कुण्डलीयगारुड्येकवीराबलामोटादिमूलविषयेषु निष्कम्पप्रतिपत्तिना प्रयुज्यमानेषु अविसंवादिता भवतीति दर्शयन् पटलमुपसंहरति–

**एवमन्येऽपि ये योगाः स्वच्छन्देन विनिर्मिताः ।**
**कालाग्निर्नरकाश्चैव पाताला हाटकेश्वरः ।।१०९।।**
**प्रदद्याद्भावितात्मा च सिद्ध्यन्ते नात्र संशयः ।**

स्वच्छन्देनेति सर्वं हि परमेश्वरेण प्रवर्तितम् । यदुक्तं श्रीश्रीकण्ठ्याम्–

---

इन उक्त अगद प्रयोगों एवम् इनके अतिरिक्त अन्य कुण्डलीय, गारुड्य, एकवीर, बाला, मोटा आदि की जड़ों को भैरवोक्त होने के कारण दृढ़ विश्वास पूर्वक प्रयोग करना चाहिये । इन्हें पीस कर पीना चाहिये । घी में या दूध में पीस कर या जल से पीस कर प्रयोग में लाना चाहिये । इसका नस्य भी देना चाहिये । इससे विष चढ़ता नहीं और तुरत उतरने लगता है । यह शास्त्र का निश्चय है ॥१०८॥

इस प्रकार के और इनके अतिरिक्त भी बहुत सारे योग भगवान् भैरव द्वारा निर्दिष्ट हैं या निर्मित हैं । स्वच्छन्द भैरव द्वारा ही कालाग्नि, नरक, पाताल, हाटकेश्वर आदि लोक भी निर्मित हैं । कहीं भी उक्त अगद ओषधियों का प्रयोग करना लाभप्रद होता है । ये सार्वत्रिक सिद्ध प्रयोग माने जाते हैं । इसमें संशय नहीं ॥१०९॥

श्री कण्ठी संहिता का यह वचन इस सन्दर्भ में ध्यान देने योग्य है–

सारा का सारा यह प्रपञ्च परमेश्वर से ही प्रवर्त्तित है । इसकी निवृत्ति अर्थात् इसका उपसंहार भी परमेश्वर में ही होता है । यह सब ईश्वर में ही अधिष्ठित है । स्थावर या जङ्गम यह सम्पूर्ण सचराचर जगत् उसी में अधिष्ठित है । महादेवाधिदेव महादेव से परे कोई भी तत्त्व नहीं है । इस कथन के रहस्य के अतिरिक्त कुछ भी नहीं है । यह सत्य वचन है । इस भाव से भावित होकर उक्त सारे प्रयोग प्रयोक्तव्य हैं । श्लोक १०९ में आये कालाग्नि नरक पाताल और हाटकेश्वर शब्दों के यहाँ प्रयोग करने से दशवें पटल की संगति भी कर दी गयी है–यह उपलक्षित हो रहा है ॥ इति शिवम् ॥

'प्रवर्तेतेश्वरात्सर्वं निवर्तेत तथेश्वरात् ।
ईश्वराधिष्ठितं सर्वं जगत्स्थावरजङ्गमम् ॥
महादेवात्परं नास्ति सत्यमेतन्न चान्यथा' ।

इति । च एवार्थे, भावितात्मैव प्रयुञ्जीतेत्यर्थः । पाटलिकी संगतिरदूर एव–

'कालाग्निर्नरकाश्चैव पाताला हाटकेश्वरः' ।

इत्यादिना पटलान्तं कटाक्षयता ग्रन्थेन कृतेति शिवम् ॥

व्याधीनामगदं दिव्यमाधीनां मूलकर्तनम् ।
उपद्रवाणां दलनं महादेवमुपास्महे ॥

**।। इति श्रीस्वच्छन्दोद्द्योते नवमः पटलः समाप्तः ।।९।।**

---

क्षेमराज पद्यानुवाद

व्याधि-आधिशामक दलक-सकल-उपद्रव वर्ग ।
परमोपास्य ! नमामि नित महादेव ! जय सर्ग ॥

भाष्यकार का निवेदन–

अचिन्त्या मे चितिश्चित्रा भैरवीयप्रभान्विता ।
स्वच्छन्दे चित्रिता सम्यक् मातृकातन्त्रमन्त्रिता ॥

महामाहेश्वराचार्य श्रीमान् क्षेमराजकृतोद्योतविवरण समन्वित
डॉ० परमहंस मिश्रकृत नीर-क्षीर-विवेक भाषाभाष्य सहित

**श्रीस्वच्छन्दतन्त्र का**

कोटराक्षविधाननामक नवम पटल परिपूर्ण ॥९॥

॥ शुभं भूयात् ॥

●

# मूलश्लोकादिपङ्क्तिक्रमः

## पञ्चमः पटलः

**उद्धरणान्यकारादिक्रमेण पञ्चमः पटलः**

**मूलश्लोकादिक्रमः षष्ठः पटलः**

**उद्धरणानि षष्ठः पटलः**

**सूक्तय:–**

## सप्तमः पटलः

**उद्धरणानि सप्तमः पटलः**

**मूलश्लोकाकारादिक्रमः अष्टमः पटलः**

**उद्धरणान्यष्टमः पटलः**

**मूलश्लोकाकारादिक्रमः नवमः पटलः**

**उद्धरणानि नवमः पटलः**

# अकारादि-विशिष्टशब्दक्रमः

## शास्त्राणि शास्त्रकाराश्च

